प्रस्तुत्यनानास्मृतीः संध्यादिद्विजकर्ममंत्रवचसां व्याख्या परा ख्यापिता २४ मीमांसाव्यवसायिभिः स्मृतिपरामर्षप्रमर्षे स्थितैर्गायत्री द्विजपुंग
वैः कृतिकिं मलकृत्तानवाव्या कृता प्रामाण्यस्य कृते विलिख्य वचनं नानामुनीनां मृदु व्याख्यानं च ननादृशं भृशमिह प्राज्ञास्मणीनोंजलिः २५ दत्वा
र्थस्वपं पथममदत्तमपरैर्मुनि सर्वस्वं ब्राह्मणानां च शब्दस्पर्शि मेदृ द्वौ २६ सूक्ष्मावबोधकमदृष्टविनाशकारि निस्सारकं किमपि भूषितकं वदे शाः
स्त्रं त्रिशस्त्रधमकारि हलायुधेन नेत्रद्वयी विसदृशं नयने द्विजानां २७ इह प्रथमं मुद्दिष्टं ग्रंथारंभप्रयोजनं वेदस्याध्ययनं कार्यमतः परमुदाहृतं
२८ वेदार्थविज्ञानफलं तदनंतरमीरितं ऋष्यादीनां तथा ज्ञानं दंतधावनकर्म च प्रातः स्नानं तथा प्रातः संध्या च समुदाहृता २९ माहात्म्यं सप्र
पंचं च प्राणायामस्य दर्शितं प्राणायामस्य गायत्र्या अपि व्याख्यानतः परम् ३० अकारि ज्ञप्यं गायत्र्या अपि व्याख्यानतः परं दर्शितं स्नानमंत्राणां व्या
ख्यानं तदनंतरं अघमर्षणमाहात्म्यव्याख्यादिकमुदाहृतं ३१ ब्रह्मयज्ञक्रियामंत्रा मंत्रास्तर्पणकर्मणः सूर्यार्घ्यदानमंत्राश्च तदनंतर मीरिताः ॥
३२ आदित्यादिग्रहाणां च पूजामंत्राः प्रदर्शिताः कृतं पुरुषसूक्तस्य व्याख्यानं तदनंतरं ३३ व्याख्यात्र्यंबकमंत्रस्य चंडीमंत्रस्य चेरिता निरग्रे
वैश्वदेवमंत्राश्च प्रतिपादिताः ३४ श्राद्धस्य पार्वणादेश्च मंत्रव्याख्या निवेदिता भोजनस्योदिता मंत्राः सायंसंध्या च कीर्तिता ३५ उक्ता मंत्राश्च
शयनगर्भाधानविधेरपि मंत्राः पुंसवनस्योक्ताः सीमंतोन्नयनस्य च ॥ [illegible]दुहेष्यंतीकर्मणो मंत्रा जातकर्मविधेरपि व्याख्याता नामकरणमंत्रा
श्च तदनंतरं ३७ मंत्रा निष्क्रमणस्योक्तास्तथान्नप्राशनस्य च चूडाकर[illegible] ततः परमुदाहृताः ३८ उक्तास्तथोपनयनमंत्राश्च तदनंतरं स
मावर्तनमंत्राश्च मंत्राः परिणयस्य च ३९ आधानस्यावस्थ्यादेर्मंत्राः प्रोक्ता[illegible] व्याख्याता मणिकाधानमंत्राश्च तदनंतरं ॥ ४० ॥ उक्ता मं
त्रास्तथा पिंडपितृयज्ञविधेरपि पश्वादिकर्मणो मंत्रास्ततः परमुदाहृ[illegible]धेन समेतां यत्राकयज्ञस्य पद्धतिं ज्येष्ठः पशुपतिश्चक्रे

यन योर्यो नानकस्यास्थितिः क एते केन घनास्यणं नन्दतुकाहूपगनेव श्रुतिः ... सहलायुधस्य सहशोना सा: प्रियः कोप्य सूद्यः क्लाह
दयेनुरागतरलोनकं दिवं हृष्यति १४ कर्णारोपितहेमकुंडलमिलन्नीलाइस... संसर्गप्रतिपद्य छलमभवद्यो पिक्त लाजिनं किंचान्यन्नु
खलध्वनिष्कलयता यस्याग्निसंग्यालये लोलासीकररत्नकंकणरणत्कं... संस्तुतः १५ पात्रं दारुमयं क्वचिद्द्विजयतेहैमं क्वचिद्भाजनं कु
त्राप्यस्तिदुकूलमिंदुधवलं कुत्रापि कृष्णाजिनं धूमः क्वापि वषट्कृताहुतिकृतो... परः क्वाप्यभूद्यत्नैः कर्मफलं धनस्य युगपज्जागर्ति यन्मंदिरे १६ नि:
स्वाध्याये व्यपगतवषट्कारशब्दो दधे स्मिन्नन्निं हुत्वा व्यसनि विकलावस्थितं धर्मोवसिष्टः हुत्वा हुत्वा विधिवदसुमादीयमानं त्रिसंध्यं धूमोद्गारं दिन
रति हविः प्राश्यमंदाग्निमग्नि· १७ आपीय श्रुतिसंपुटेन हृदये संस्थापिता सूरिभिर्विस्रब्धाः सरसत्वनिश्वस्तशिलाः पर्णान्तरे सिप्रिभिः आवद्धा।
कविभिर्विमृश्य खलकथा वंधैः प्रवंधैरपि प्राप्यानि प्रतिपत्तनं प्रतिगृहं प्रत्यग्रणं यद्गुणाः १८ मीमांसा सर्वस्वं वै व्याकरणसर्वस्वं यत्कृतं शैवसर्वस्वं पंडितस
र्वस्वमसौ सर्वस्वं सर्वधीरणां १९ आसन्याकृतिसंनिभाकृतिकृतिप्रसमंडले पंडिता व्याख्यातामतिशालिनो यद्गुरुडाचार्येण वेदः परं स्यद्भुतत्त
दपीत्यनेन विदुषा विश्वप्रसिद्धैः पदैः संध्यादिद्विजकर्ममंत्रचयसो व्याख्यानमेतत्कृतं २० आस्तेवाकृतिसन्निभोपिन पुमांस्तस्मात्परः साह
हसी यो वेदार्थविवेचनाय कुरुते सज्जोरसज्ञाननो॥ किं त्वस्मिन्गुडेनवर्ज्यरचितं प्रागेव चेद्विद्यते व्याख्यानं कियदेकवेदवचसां तेनेदमारभ्यते।
२१ अर्थो येन विचार्यतेत्यविदितं येषामृषिश्छंदसी ये ज्ञानं तिनदेवतापरिचयो यैर्लौपयोगे कृतः विज्ञायापि पदक्रमं फलवहिर्भावेनैनैः प्राप्यहं तादृद
वेह वेदमारवहनक्लेशः परं प्राप्यते २२ अर्थाववोधेन विना नशब्दे श्लोकं ससुन्मीलनिवेदिके पि अकारिकर्मौचितवेदभागव्याख्या विमृश्येति हलायु
युधेन २३ स्नानोपहृतिमग्रजः पशुपतिः श्राद्धादिकृत्येष्वधादीशानः कृतवान् दिजाह्निकविधौ ज्येष्ठोपरः पद्धतिं तेनास्मिन्नसुनाफलस्तुतिपरा

बृहस्पतिऋषिर्विश्वेदेवा देवता यजुरुष्णिक्छन्दो नानाविंश मिदं नु मन्त्रणे विनियोगः। अस्यार्थः। मदीयं मनः आज्यस्य मया चाहूयाः स्वाहवनीयं
प्रत्युपतां सेवनां प्राप्नोत्विति यावत्। किंभूतं मनः ज्योतिरिव प्रकाशकमित्यर्थः। बृहस्पतिरिमं प्रकृतं यज्ञं तन्नोनु विस्तीर्णं करोतु। पि बृहस्पतिरि
भा॰ य॰ दधातु संपूर्णं करोतु किंभूतमरिष्टमिष्टहीनम् तथा विश्वेदेवासः सर्वे देवाः इह प्रकृते कर्मणि मादयन्ताम् हृष्टा भवन्तु। एवं सति हे देव ॐ प्रति
२७ रक्षणार्थः रक्षितः सन् प्रतिष्ठितो भवेत्यर्थः। यत्किंचिद्दृष्ट्वा देवादिकं कृतं तस्य फलं मदीयं मनः प्राप्नोतु तस्मिंश्च कर्मणि बृहस्पतिनापि रिते पूर्ण
बाहृष्टा भवन्तु तत्त्व कर्मणि प्रतिष्ठितं भूत्वा मदीया स्तुष्टा यस्य संपद्यतामित्याशंसा वाक्यार्थः ॐ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति
ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु १ शिवसंकल्प ऋषिः कर्मणो देवता त्रिष्टुप्छन्दः आदित्योपस्थाने विनियोगः। अस्यार्थः। यन्म
निद्राहीनस्य दूरमुदैति गच्छति किंभूतं दैवं देवस्य ब्रह्मणो विज्ञानस्वरूपस्य प्रकाशकमपि च तत्सुप्तस्य तथैव दूरं एवैति
आगमनेन दूरस्याभिधानं सर्वत्रोपसंहृतवृत्तित्वस्थापनार्थम्। किंभूतं मनः ज्योतिषां प्रकाशकानां चक्षुरादीन्द्रियाणां मध्ये दूरंगमं ज्योति
यं अन्यानि चक्षुरादीनि सन्निहितप्रकाशकानि मनस्तु व्यवहितप्रकाशकमित्यर्थः। पुनः किंभूतं एकं मुख्यं तत्र चक्षुरादीनि स्थानप्रकाशकानि
हितं सूक्ष्मप्रकाशकम्। अतश्चक्षुरादीनां मुनमत्वं तन्मे मम मनः शिवसंकल्पमस्तु कल्याणाभिलाषि भवतु। मदीयं मनो निष्काभिलाषं पूर्ण
भिलाषि भवत्वित्याशंसा वाक्यार्थः १ ॐ धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः सचेतसो विश्वेदेवा यज्ञं प्रावन्तु नः शुभे १। मधुच्छन्दा महेन्द्र ऋषिः
शुचिरूपं छन्दो विश्वेदेवा देवता विनियोगः पुरस्थाने विनियोगः। अयमर्थः। अग्निरिन्द्रो ब्रह्मा बृहस्पतिरेते यज्ञं प्रकृतं कर्मणः शुभे अस्माकमस्मै देवाः इमे सोम
न्तु आपान्तु किंभूतो गम्यादिगणः धामच्छत् धाम आच्छ्यन्त्यादयति पूरयतीति धामच्छत् न्यूनपूर्णतातिरिक्तानाशनेन च यथावत्कारे एजभावा यत्लोकया
ब्रह्मस्वरूपं अमु स्म
भ्रु प्लेषु श्रूयते २०

2

ं भूतः देवः ज्ञानादिगुणयुक्तः एतच्च विशेषणद्वयमग्न्यादिभिश्चतुर्भिः सह संबध्यते। किंच विश्वेदेवा नोऽस्माकं शुभेशुभनिमित्तं प्रावन्तु आगतं किंचान्यन्तु
सचेतसः समानचेतसः एकमनस इति यावत् ये अग्न्यादयो देवाः आश्रयभूतं कर्म यथावत्कुर्वन्ति। ते प्रकृतकर्मणः प्रकृतं कर्मेव यथावत्कु चिह्नाजनं
शुभे निर्वाहाय प्राप्नुवन्त्वित्याशंसावाक्यार्थः। २। ॐ त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः। रक्षा तोकमुत त्मना। २। उशनाकाव्य ऋषिः। [illegible]
त्रीछन्दः अग्न्युपस्थाने विनियोगः। अयमर्थः। हे यविष्ठ युवतम अग्ने त्वं नॄँ मनुष्यान्भार्यादिपरिजनानिति यावत्। पाहि रक्ष कथंभूतान्दाशुषः
हवींषि दत्तवतो ममेत्यर्थः। किंच गिरः स्तुतिवचनानि शृणुधि शृणु श्रुत्वा च मम तोकमपत्यं रक्ष उत अपि च त्मना आत्मानञ्च हे यविष्ठ त्वं नाव
सेति संबन्धः। हे अग्ने त्वं मद्दत्तानि हवींषि गृहीत्वा स्तुतिवाक्यानि च श्रुत्वा मम भार्यादिपरिजनान् पुत्रान् गार्हपत्याग्नौ स्वरक्षेत्यभ्यर्थना वा।
अत्र दाशुष इति दाशृ दाने इत्यस्माल्लिट् क्वसुश्च दाश्वान्साह्वान्मीढ्वांश्चेति अहिं वचनमनिट्त्वञ्च निपात्यते दाश्वस् शब्दस्य षष्ठ्येक
ः प्रसारणे रूपम्। त्मनेति मन्त्रेष्वाङ्यादेरात्मन इत्याकारलोपः द्वितीयार्थे तृतीया। २। ॐ एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि। अवतत
नाकावसः कृत्तिवासा अहिंसन्नः शिवोऽतीहि। १। प्रजापतिर्ऋषिः विराट्पङ्क्तिश्छन्दो रुद्रो देवता त्र्यम्बकपुरोडाशाभ्यञ्जने विनियोगः। अस्या
द्र अतीहि पाहि केनेतेन अवसेतेन अवसं वर्त्मे शंबलं एतेनोपस्थितेन पुरोडाशरूपेण शंबलेन किम्भूतः मूजवतः परः मूजवन्नाम सुमेरु
तो रुद्रस्य निवासः तस्य परः परस्ताद्गामी पुनः किंभूतः अवततधन्वा आरोपितधनुः हिंसादीनामलं व्याप्त इत्यर्थः। पुनः किंभूतः नाकाव
ह्राकुशलं त्वक्कृतमवसं शम्बलं येन सः पिनाकावसः [illegible] भूतस्त्वं नोऽस्मान् सन्नः शिवः
शान्तः सौम्यः अतीहि पाहीति पुनर्वचनं पूजार्थम्। हे रुद्र मत्तः एवं पुरोडाशं शम्बलं रुद्रांकुशे कृत्वा धनुरारोप्यास्मानहिंसन्सौम्यो भू
न परा

ग्रा.सू रापन्—शब्दो निपातितः इत्याकृष्णस्य मंत्रव्याख्या। यस्य पुनर्नवग्रहानेव पूजितुमिच्छा भवति तेन गणपतिपूजापूर्वकं याज्ञवल्क्योक्तैर्मंत्रैर्नवग्रहपूजा कार्या

२७ तथा ग्रह यज्ञे आदित्यादीनां मंत्रविधौ याज्ञवल्क्यः आकृष्णेन इमं देवा अग्निर्मूर्द्धा दिवः ककुत्। उद्बुध्यस्वेति च क्रमाच्चो यथासंख्यं प्रकीर्तिताः॥ बृहस्पते अति

यदर्य स्तथैवान्नात्परिस्रुतः। शन्नो देवीस्तथा काण्डात्केतुं कृण्वन्निमाः क्रमात्॥ गणपतिमंत्रस्य प्रजापतिऋषिर्यजुषां छन्दो नास्ति गणपतिप्रियपतिनिधिप

तिअश्वा देवता अश्वमेधे अश्वप्रदक्षिणकरणे विनियोगः। मंत्रो यथा। ॐ गणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे निधीनां त्वा निधि

पतिं हवामहे वसो मम हे मम वसो सर्वस्वभूत त्वां त्वां हवामहे आह्वयामः किं भूतं गणानां मध्ये गणपतिं गणारुद्रपरिषदास्तेषां पतिं स्वामिनं पुनरपि त्वां

हवामहे किं भूतं प्रियाणां मध्ये प्रियपतिं प्रियाण्यभिलषितानि भार्यादीनि तेषां पतिं पुनरपि त्वां हवामहे किं भूतं निधीनां मध्ये निधिपतिं निधयः पद्माद

यस्तेषां पतिं। अत्र भौतिकविघ्नोपशमनाय भार्यादिप्रियलाभाय धनलाभाय च त्वां गणपतिं प्रियपतिं निधिपतिं च आह्वयामः इति वाक्यार्थः। हवामहे इति

तिङां तिङो भवन्तीति उत्तमपुरुषएकवचनस्थाने बहुवचनम्। इति गणानां त्वा मंत्रव्याख्या। आदित्यमंत्रो व्याख्यात एव। सोममंत्रस्य वरुण ऋषिः विरा

ट्छन्दः देवता यजुषां छन्दो नास्ति राजसूये यजमानदक्षिणबाहुग्रहणपूर्वकजपे विनियोगः। मंत्रो यथा। ॐ इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते

ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय इमममुष्य पुत्रममुष्यै पुत्रमस्यै विशे। अस्यार्थः। अत्र प्रकृतत्वादिदम्शब्देन सोमः परामृश्यते। हे देवाः इमं सोमं सु

वध्वं जनयत किं भूतं असपत्नं सपत्नः शत्रुस्तेन रहितं सौम्यत्वेन सर्वप्रियत्वात्। एतज्जननस्य किं प्रयोजनमित्याह महते क्षत्राय क्षत्रत्वाय राजभावाय लोकपा

लत्वायेति यावत् ज्यैष्ठ्याय ज्येष्ठभावाय सर्वोत्तमत्वाय किं भूताय महते सातिशयाय पुनः कीदृशमिमं प्रत्यक्षदृश्यममुं नित्यपरोक्षं परोक्षं परं ब्रह्मस्वरूपं अमुष्य एम

पुत्रं अमुष्य पुत्रं जातं सुषुम्णाभिधानस्य सूर्यरश्मेः सोमत्वात्। अमुष्या दिशः पुत्रं अत्रिमहर्षेश्चक्षुर्निःसृतं तेजो दिशा धृतं सोमो जायत इति पुराणेषु श्रूयते २७

प्रथमपुरुषस्य बहुवचने छांदसं रूपम्। इत्यहश्यमंत्रव्याख्या। ततो देवपूजामारभेत्। तत्र पद्मपुराणम्। एवं सूर्यं नमस्कृत्य त्रिः कृत्वा च प्रदक्षिणाम्। द्वि
जं गां कांचनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत्। तथा विष्णुपुराणम्। ततो गृहार्चनं कुर्यादभीष्टसुरपूजनम्। जलाभिषेकपुष्पाणां धूपानां च निवेदनैः। अत्र यद्य
पि सूर्यादिदेवतापूजासु पौराणिकादिमंत्रा बहव एव संविहिताः संति तथाप्यस्माभिर्वैदिकमंत्रव्याख्यानस्योपात्तत्वात्तत्प्रसंगेनैवानुष्ठानाभिधानं तात्प
र्यं तु वैदिकमंत्रव्याख्यायामेव। अतो वैदिका एव मंत्रा लिख्यंते। एवं सति नवग्रहपूजाप्रकरणे याज्ञवल्क्येन आकृष्णेनेत्यादि विहिता एतावता इत्यादित्यपूजा
तेनैव मंत्रेण करणीया। आकृष्णेति मंत्रस्य हिरण्यस्तूप ऋषिरांगिरसो वा त्रिष्टुप् छंदः सूर्यो देवता सर्वमेधे सौर्यग्रहणे विनियोगः। मंत्रो यथा। ॐ आकृष्णे
न रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्। अस्यार्थः सविता आदित्यः आयाति आगच्छति किंभूतो देवः
स्तुत्यादियुक्तः केन रथेन किंभूतेन हिरण्ययेन सुवर्णमयेन किंकुर्वन् भुवनानि पश्यन् भुवनवर्तिनो मनुष्यान् कर्मभूमिस्थान् प्रकाशं पापकर्तॄन्निरीक्षमाणः
न्निरीक्ष्यमाण इत्यर्थः। न केवलमपरं च निवेशयन् स्वेषु स्वेषु व्यापारेषु समावेशयन् किं अमृतं देवं मर्त्यं मनुष्यं च मनुष्या हि सूर्योदये स्वकर्मसु वर्तमाना
देवान्प्रीणयंतीति प्रीताश्च देवता वृष्ट्यादिना मनुष्यानाप्याययंतीति देवमनुष्ययोः परस्परव्यापारसमावेशः। पुनः किंभूतः सविता आवर्तमानः पुनः पुन
रनुदिवसं तमेव देशमागच्छन् केन सह रजसा रात्रिकालेन सह किंभूतेन कृष्णेन मलिनेन प्रायेण रात्रिकाले दुरयकर्मणा मनुष्या इति रात्रिकालस्य कृ।
ष्णत्वमुक्तम्। अयं वा वाक्यार्थः। यः सविता देवमनुष्यव्यापारस्य व्यवस्थापको यश्च कर्मभूमिवर्तिनां पुण्यपापानामपि साक्षिभूतः प्रत्यहं समायाति तस्मादहं
पां कुर्म इति। तत्राकृष्णेनेति व्यवहितोऽप्याङ् न्यते चाव्यवहिताश्चेति पाणिनिस्मरणाद्वर्तमानपदेन सह संबध्यते तेन आवर्तमान इति व्याख्यानम्। यथार
थेन इत्यत्र स्थितस्य आङ् संबंध्याकारस्य यातीति क्रियापदेन संबंधः ऋत्व्यवास्त्व्यसाध्वीहिरण्ययानि छंदसीति पाणिनिस्मरणाद्धिरण्ययार्थे हिर

णार्थी पुरः पश्चादिति कालोपलक्षकं एनेन सृष्टौ कश्चिदपि देशे काले च तस्य मनोः पुत्रपौत्रसमृद्धिभिः प्रतिमन्वोऽन्त्रोऽग्रस्थादपि मा भूदित्यभिप्रायः।
द्वा० स ५१ अनेन मंत्रेण चाभिमुखीकृत्यास्य दत्तमाचमनीयं भगवान्गृह्णात्वित्याशंसा वाक्यार्थः॥ ॐ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यं। पशूंस्तांश्चक्रे वायव्या
ना रण्या ग्राम्याश्च ये। अस्यार्थः। तस्मादिति येन पदेन सकलचराचरात्मकविश्व मेन ह्यासमिति पादोऽस्येहाभवत्पुनरित्युपरितनकंडिकया प्रतिपादितं तत
स्मात्पुरुषस्य चतुर्थपादात् किं भूतात् सर्वहुतः सर्वहुतसंज्ञयत्तद्रूपात् पृषदाज्यं हविः संभूतं उत्पन्नं तत्पृषदाज्यं कर्तृभूतं पशूंश्चक्रे कृतवान्का
न् पशून् ये आरण्या ग्राम्याश्च तान् किं भूतान् वायव्यान् वायुदेवत्यान् अत्रापि अनेन मंत्रेण पुरुषमभिमुखीकृत्यास्मै दत्तं स्नानं गृह्णात्विति वाक्या
र्थः। ॐ तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे। छंदांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत। अस्यार्थः। तस्मात्सर्वहुतयज्ञसंज्ञपुरुषाद् ऋचः ऋग्वे
दः सामानि सामवेदश्च जज्ञिरे जाता इत्यर्थः। तस्मादेव छंदांसि गायत्री त्रिष्टुबादीनि जज्ञिरे जातानि तस्मादेव यजुः यजुर्वेदो अजायत जात इत्यर्थः।
एतेन ब्राह्मणादिवर्णचतुष्टयरूपा त्रयी सकलमंत्राणामाच्छादनभूतं छंदो भगवत एव समुत्पन्नमित्यर्थं भवति। त्रयी प्रावरणमिति विष्णुपुराणं। स
र्वेषामेव वर्णानां त्रयी प्रावरणं स्मृतम्। तमुत्सृजति यो मोहात्तेन वै नग्नाः प्रकीर्तिताः। छंदसामाच्छादनत्वे योगियाज्ञवल्क्यः। छादनाच्छंद उद्दिष्टं वाससीव चा
कृते। तदयमभिप्रायः त्वत्त एव भगवदुत्पन्नमाच्छादनं तुभ्यं ददामीति मंत्रार्थः। ॐ तस्मादश्वा अजायंत ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्मा
ज्ञाता अजावयः। अस्यार्थः। तस्मात्सर्वहुतयज्ञस्वरूपात्पुरुषात् अश्वा ये के चोभयादतः उभयतोदंताः पशवस्तेऽप्यजायंत जाताः तस्मादेव गावश्च ज राम ५१
ज्ञिरे जाताः तस्मादेवाजावयश्च जाताः [illegible] उभयादततस्तेषामपि हृस्वत्वे इति दीर्घः। गावो हेति हप्रकारार्थो व्यपसमुच्चये च। अ
त्रकंडिकात्रमे यत्किंचिद्बहिरस्माकं यत्तत्साधनं विद्यार्थं वा दमनात्मकाश्च त्रयो वेदाश्च तत्सर्वं पुरुषांतर्गतमेव पुरुषमेव यागस्वरूपाज्ञानमिति वाक्या

यत्पूर्वकंडिकाद्युक्तसर्वदेशकालव्यापित्वं संसारापवर्गप्रभुत्वरूपं नाम अतोस्मात्कारणात्पुरुषः ज्यायान्महत्तरः यतोयं ज्यायान् श्रेयः अतः पादः।
श्चास्य विश्वा भूतानि चराचरस्थापकानि पंचमहाभूतानि अस्य पुरुषस्यापरस्त्रिपात्स्यांद त्रयं ऋग्यजुःसामात्मकं सूर्यस्वरूपममृतं मोक्षद्वारक
स्मादि विश्वरूपं मंडलभेदद्वारेण गच्छतां मुमुक्षूणां परमात्मनिलयात्मको स द्वारमिति भावः एतेनास्य भगवतो विश्वं पाद इति पादस्तुत्वात्तस्मै पाद्यं
दीयते ॥ ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोस्येहाभवत्पुनः। ततो विष्वङ् व्यक्रामत्साशनानशने अभि। अस्यार्थः। अस्य चतुष्पाल्लक्षणस्य पु
रुषस्य योसौ त्रिपात्पुरुषः ऋग्यजुःसामात्मलक्षणो भगवानादित्यः सोप्युदैत् अभ्युदितवान् किंभूतः ऊर्द्धः कर्मबंधनिबंधानां स्थावरजंगमानामु
परि भूत इत्यर्थः। किं चास्य चतुष्पाल्लक्षणस्य पुरुषस्य पादश्चतुर्थांशः हिरण्यगर्भेनयाइह जगत्यभवत् प्रथमतः सत्तामात्रेणात्मानमकरोत्। इह
किंभूते जगति साशनानशने भोक्तरि चाभोक्तरि च येषां सुकृतदुष्कृते अधिकारस्ते भोक्तारो ब्राह्मणादयः येषामनधिकारस्ते अभोक्तारः कृमिवृक्षप्रभृ
तयः तदेवं कर्माधिकारिणि जगति अपारः पादो व्यापकतया अभवत्। प्रथमं सत्तामात्रेणातिष्ठत् ततः पुनस्तदनंतरं विष्वङ् व्यक्रामत् विश्वं
सर्वेशः व्यक्रामद्व्याप्तवान् कर्माधिकारीणामनधिकारिणां च शरीराणि व्याप्यावस्थानमकरोदिति यावत् अत्र विषुशब्दपूर्वादंचुगतिपूजनयो
रित्यस्माद्धातोः क्विन्प्रत्यये विष्वङ् इति रूपं अभ्युदैदित्यत्र साशनानशने अभीत्यत्र च व्यवधानस्थितोप्यभिरुपसर्गः क्रियया सह संबध्यते व्यवहिता
श्चेति पाणिनिवचनात्। अत्र च यो भगवांस्त्रिपाल्लक्षणो हरहरभ्युदेतीति नित्यातिथिरूपः स्तूयते तस्मै अर्घ्यमनेन दीयते। ॐ ततो विराडजायत विरा
जो अधि पूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः। अस्यार्थः। ततः पुरुषाद्धिरण्यगर्भो विराडजायत ब्रह्मा अभवदित्यर्थः। ततोऽनंतरं तस्माद्विराजो
ब्रह्मणः पुरुषो मनुरध्यजायत स मनुः पुरोऽग्रे पश्चादपि जातः सन् भूमिमत्यरिच्यत अतिरिक्तो भूत् अधिको भूदिति यावत् ॥ अत्र भूमिपदं देशोपलक्ष

ब्रा·स·
९६

जेद्नेनमन्त्रेण। प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवताऽग्निसंस्कारे विनियोगः। ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः। इहैवायमि-
तरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्। अस्यार्थः। अग्निं प्रहिणोमि प्रस्थापयामि किंभूतं दूरं लोकान्तरप्रापकम्। पुनः किंभूतं क्रव्यादं मांसादम्॥
असौ गत्वा मानुषमांसान्यभिलषतीति। असंगत्या त्वया यमराज्यं गच्छतु यमस्याधिकारं यातु किंभूतः रिप्रवाहः रिप्रं पापं वहति प्रापयतीति रिप्रवा-
हः यद्वतरः क्रव्यादादन्यो जातवेदाः जातज्ञानोऽग्निः। इहैव स्थाने हव्यं वहतु प्रापयतु हविः केभ्यो देवेभ्यः किंभूतः प्रजानन् स्वीय [illegible] प्र-
काशयन् जानन्नित्यर्थः। अत्र क्रव्यादममङ्गलमग्निं दूरं प्रेषयामि यमराज्यं गच्छन्त्विति अग्नेः प्रस्थापनं पूर्वार्द्धस्य वाक्यार्थः। अयमि [illegible] स्य-
इहमदीयगृह एव वैश्वदेवे त्वी यमधिकारं नानन् देवेभ्यो हविः प्रापयत्विति आशंसोत्तरार्द्धवाक्यार्थः। अनेन मन्त्रेण क्रव्यादांशं परि [illegible] स-
स्कृतस्थानेऽनुष्ठानपरंपरानुष्ठानप्रामाण्यादग्न्यारोपणं परिस्तरणं कुशदानञ्च करणीयम्। तत्राग्न्यारोपणमन्त्रो यथा॥ ॐ अयन्ते योनिर्ऋत्वि-
जो यतो जातो अरोचथाः। तं जानन्नग्न आरोहाथा नो वर्द्धया रयिम्॥ प्रजापतिर्ऋषिरनुष्टुप् छन्दोऽग्निर्देवता ऋषयोपि अग्न्युपस्थाने विनियोगः
। अस्यार्थः॥ अरणिरित्यध्याहार्यम्। हे अग्ने पतो यस्मादरणेः सकाशाज्जातः सन् रोचथाः दीप्तोसि अयन्ते तव ऋत्विजः पुरोहितः योनिरुत्पत्तिस्था-
नं तं आरोह॥ आरूढो भव किं कुर्वन् जानन् अथानन्तरं नोऽस्माकं रयिं धनं वर्द्धय वृद्धियुक्तं कुर्वित्याशंसा मन्त्रार्थः॥ अनेनैव मन्त्रेण गार्हपत्या-
हवनीययोररणौ समारोपणं क्रियते आरोह थावर्द्धया इत्युभयत्रापि आकारश्छान्दसः॥ अनेनाग्निमारोप्याग्निपूर्वे उदगग्रं परिस्तरणं कु-
र्य्यात्। अत्र परिस्तरणमन्त्रो यथा॥ ॐ अग्निमीळे इति॥ अस्य व्याख्या कृता॥ ततो दक्षिणे प्रागग्रं कुशपत्रं दद्यादनेन मन्त्रेण॥ ॐ इषे त्वोर्जे
त्वेति अयमपि व्याख्यातः॥ ततः पश्चिमे उदगग्रमेवापरकुशपत्रं दद्यादनेन मन्त्रेण ॐ अग्न आयाहीति॥ अयमपि व्याख्यातः

राम·
९६

श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलिरथापि वा। मनुः। पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्। तासां क्रमे
ण सर्वासां निष्कृत्यर्थं महर्षिभिः। पंच क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्। मनुविष्णुयमदेवलाः। पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः। स
गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते। देवतातिथिभृत्यानां पितॄणामात्मनश्च यः। न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति। यमः। देवताभ्यः पितृभ्यश्च
बलिर्भूतेभ्य एव च। वैश्वदेवबलिर्वा यः सायं प्रातर्विधीयते। अत्र वैश्वदेवसमभिव्याहारात्प्रातः शब्दो मध्याह्नवचनः। सर्वमेतद्यथाशक्ति निर्वपेद्विधिपूर्वक
म्। एवं युक्तो ऽश्नुते स्वर्गं गृहस्थो नात्र संशयः। छन्दोगपरिशिष्टे कात्यायनः। सायं प्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च। अनश्नतापि सततमन्यथा किल्बिषी
भवेत्। व्यासः। आपद्यपि च कष्टायां पञ्च यज्ञान्न हापयेत्। स्वर्गापवर्गयोः प्राप्तिर्महायज्ञैः प्रचक्षते। कूर्मपुराणम्। अकृत्वा तु हि यः पञ्च महायज्ञान्द्विजो
त्तमः। भुञ्जीत चेत्स मूढात्मा तिर्यग्योनिं स गच्छति। वाराहपुराणे मनङ्कं प्रति धर्मव्याधवाक्यम्। दैवो भौतस्तथा पित्र्यो मानुषो ब्राह्म एव च॥ एते पञ्च म
हायज्ञा ब्रह्मणा निर्मिताः पुरा॥ ब्राह्मणानां हितार्थाय स्वर्गे ऽनन्तसुखाय च। ब्रह्मचारी नात्र वर्णानां ब्राह्मणैः कारिताः शुभाः। एवं कृत्वा जङ्गमार्थं स्थाव
रार्थञ्च पुष्णाति। अन्यथा व्रीहयो येऽत्र एकैकाः मृगपक्षिणः। सततं दहति भोक्तॄणां तथा मांसं तु तत्समम्। अत्र वैश्वदेवान्तराले छन्दोगपरिशिष्टम्॥ अ
ग्न्यादिर्गौतमेनोक्तो होमः शाकल एव च। अनाहिताग्नेरेवैष युज्यते बलिभिः सह। तथा गौतमः। अग्नावग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजापतिः स्वि
ष्टकृदिति होमश्च। योगियाज्ञवल्क्यः। अन्नं व्याहृतिभिर्हुत्वा तथा वैश्वदेवं बलिः। भूतेभ्यश्च बलिं दद्यात्ततो ऽग्नौ प्राग्वदग्निमान्। कात्यायनः। कृत्वाद
ग्निं मन्त्रेण संस्कृताग्नावनग्निमान्॥ वैश्वदेवं ततः कृत्वा जुहुयाच्छाकलेन च। एतद्देववचनद्वयमनूपदर्श्य निरग्निभिर्वाजसनेयिभिरत्र शा
नात्परं परया क्रियमाणस्य वैश्वदेवस्य मन्त्राद्या आम्नायन्ते। तत्र पञ्चभूसंस्कारान्कृत्वा आत्मदक्षिणे ऽग्निमुपस्थाप्य ज्वलन्तं प्रोक्ष्य पाक्यान्सन्न्य

हन्यै। तथा इन्द्रापूषणौ नः शं सुखाय भवताम्। किमर्थं सुविताय साधुगमनाय उत्तमगतिप्राप्त्यै न केवलं शं योः स्वकल्याणयोगाय च १० ॐ शंनोदे-
ब्रा॰ स्व॰ वीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः दध्यङ्ङाथर्वण ऋषिर्गायत्री छन्द आपो देवता पूर्ववद्विनियोगः ११ अस्य व्याख्यानं मध्यान्हस्ना-
४९ ने लिखितम्। ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः १२ मेधातिथिर्ऋषिर्गायत्री छन्दः। पृथिवी देवता पूर्ववद्विनियोगः
।अयमर्थः। हे पृथिवि नोऽस्माकं स्योना सुखदा भव अतः अनृक्षरा भव नृक्षराः कण्टकाः सासां नास्तीत्यनृक्षरा निष्कण्टका इत्यर्थः तथा निवेशनी भ-
व निवेशोऽवस्थानं तद्योग्या एवंविधा च भूत्वा नोऽस्माकं शर्म सुखं यच्छ देहि किंभूता सती सप्रथाः सविस्तरा अतिविस्तरेत्यर्थः। हे पृथिवी अस्माकं सुख-
रूपा अकण्टका अवस्थानार्हा च भूत्वा सुखं देहीति मन्त्रवाक्यार्थः सप्रथा इति। प्रथ प्रख्याने इत्यस्मात् असुन् प्रत्ययान्तस्य प्रथमैकवचनम् १२ ॐ आपो
6 हिष्ठेति। यो वः शिवतम इत्यादि। तस्मा अरङ्ग इत्यादि। त्रयाणां सिन्धुद्वीप ऋषिर्गायत्री छन्द आपो देवता पूर्ववद्विनियोगः एतन्मन्त्रत्रयस्य व्याख्यानं प्रा-
तःस्नाने तु संधेयम् १५ ॐ द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशा-
न्तिः सर्वशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि १६ दध्यङ्ङाथर्वण ऋषिरिन्द्रो देवता यजुषां छन्दो नास्ति पूर्ववद्विनियोगः।अयमर्थः।द्यौः स्वर्गः शा-
न्तिः सर्वे विघ्नोपशमोऽस्तु अस्माकमित्यध्याहार्यम्। तथान्तरिक्षं पृथिवी च शांतिरस्तु आपः शां[...]तिः शान्तय औषधयो व्रीह्यादयः शष्पान्तः शान्तयः सं-
तु वनस्पतयो वृक्षाः शान्तयः सन्तु एवं या शान्तिः कृता सैव शान्तिरस्तु अत्र सर्वत्रैव द्यौः प्रभृति शान्तिरित्यन्तैः पदैः तत्स्वर्गाधिष्ठात्र्यो देवता अस्माकं
विघ्नोपशमपूर्वकमभीष्टसम्पादनाय भवन्त्वित्याशंसा वाक्यार्थः। आपः शांतिरित्यादिषु सुपां सुपो भवन्तीति बहुवचने एकवचनम् १६ ॐ दृते दृंह मा एम
मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्। मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे मित्रस्य चक्षुषा समीक्षामहे १७ दध्यङ्ङाथर्वण ऋषिरिं- ४९

होर्भः स्मच्छन्दसीति हल्कारस्य भकारः लङर्थे लोट्। ओं इन्द्रो विश्वस्य राजति शं नो अस्तु द्विपदे शं चतुष्पदे ७ इत्यङ्गुः आथर्वणऋषिर्द्विपदा विराट् छन्दः
इन्द्रो देवता पूर्ववद्विनियोगः। अयमर्थः। इन्द्रो विश्वस्य सर्वस्य जगतः राजते ईशो यतस्तत्प्रसादेन नोऽस्माकं द्विपदे मनुष्यस्य भार्यापुत्रादिकस्य सु
खमस्तु तथा चतुष्पदे गवादिकस्य शमस्त्विति पूर्वेणैव संबंधः। विश्वप्रभोरिन्द्रस्य प्रसादेनास्माकं भार्यापुत्रगवादीनां सुखं भवन्ति न्याशंसावा
क्यार्थः। द्विपदे चतुष्पदे इति षष्ठ्यर्थे सप्तम्यौ ७ ओं शन्नो मित्रः शं वरुणः शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ८ इत्यङ्गुः अथर्व
णऋषिरनुष्टुप्छन्दः इन्द्रो देवता पूर्ववद्विनियोगः। अयमर्थः। अनेन शान्तिकर्मणा नोऽस्माकं मित्रः सूर्यः शं भवतु सुखाय भवतु तथा वरुणः शं भवतु अर्य-
मा सूर्यश्च नः शं भवतु तथा इन्द्रो बृहस्पतिश्च नः शं भवतु तथा विष्णुः नः शं भवतु किंभूतो विष्णुः उरुक्रमः उरुर्बृहुः क्रमो यस्य स उरुक्रमः त्रिविक्रम इत्य
र्थः भवत्विति क्रियापदमेकत्र पठितं सर्वत्रैव संबध्यते। मित्रवरुणार्यमेन्द्रबृहस्पतिविष्णवोऽस्माकं सुखाय भवन्त्वित्याशंसावाक्यार्थः ८ शन्नो वातः
पवतां शं नस्तपतु सूर्यः। शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु। इत्यङ्गुः आथर्वणऋषिरनुष्टुप्छन्दो वायुसूर्यपर्जन्या देवता पूर्ववद्विनियोगः। अयम-
र्थः। वातो नः शं सुखाय पवतां वहतु सूर्यो नः शं सुखाय तपतु अहाहको भूत्वेत्यर्थः पर्जन्यो देवो मेघः नः शं सुखायाभिवर्षतु किंभूतः कनिक्रदत् आक्रन्द-
मानः गर्जन्नपि सुखाय भवत्वित्यर्थः। वातसूर्यपर्जन्याः। अस्माकं सुखाय भवन्त्वित्याशंसावाक्यार्थः ९ अहानि शं भवन्तु नः शं रात्रीः प्रतिधीयताम्। शं
न इन्द्राग्नी भवतामवोभिः। शं न इन्द्रावरुणा रातहव्या शं न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं योः। १०। इत्यङ्गुः आथर्वणऋषिरहानि शानि
शन्द्विपदागायत्री शं न इन्द्राग्नी त्रिष्टुप्छन्दः इन्द्रो देवता पूर्ववद्विनियोगः। अयमर्थः अहानि दिवसा नोऽस्माकं शं सुखाय भवन्तु तथा रात्रिः शं सुखाय प्र-
तिधीयताम् प्रतिदधातु भवत्विति यावत् तथा इन्द्राग्नी नः सुखाय भवताम् कैः अहोभिः पालनैः तथा इन्द्रावरुणौ शं सुखाय भवेताम्। किंभूतौ रात

८५८

श्री.स. र्त्यार्थम्। हे इन्द्र त्वं यस्त्वं गोर्थिनां स्वर्गे दृढा असि अतस्तुभ्यं विद्युद्रूपाय मेघरूपाय नमो ऽस्त्विति मन्त्राशंसावाक्यार्थः॥२०॥ ॐ यतोयतः समीहसे ततो नो अ
५२ भयं कुरु। शन्नः कुरु प्रजाभ्यो ऽभयं नः पशुभ्यः २१ इध्माङ्गिरा अथर्वण ऋषिरनुष्टुप्छन्द इन्द्रो देवता पूर्ववद्विनियोगः अयमर्थः। हे इन्द्र त्वं यतोयतः यस्माद्य
स्मात्स्थानाद्दुरुपचारादस्माकं भयं कर्तुं समीहसे चेष्टसे ततस्तस्मान्नो ऽस्माकमभयं कुरु। किं च नो ऽस्माकं प्रजाभ्यः पुत्रादिभ्यः शं सुखं कुरु तथा नः
पशुभ्यो गवादिभ्यो ऽभयं कुरु इति पूर्वेण संबन्धः अस्माकं त्वं दुरुपचारं प्राप्यास्माकं भयाय चेष्टसे तस्मादस्माकमस्मत्पुत्रादीनामभयं सुखं च कुर्वित्याशं
सावाक्यार्थः २१ ॐ सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः २२ इध्माङ्गिरा अथर्वण ऋषिरापो देवता ऽनुष्टु
प्छन्दो नास्ति पूर्ववद्विनियोगः। अयमर्थः। आपः ओषधयः व्रीह्यादयः नो ऽस्माकं सुमित्रियाः सन्तु साधु मित्रत्वेनावस्थिता भवन्तु या दुर्मित्रियाः दुष्टमित्र
त्वेनावस्थितास्तास्तस्मै सन्तु तस्मै कस्मै यो ऽस्मान्द्वेष्टि अस्माकं द्वेषं करोतीति यं च वयं द्विष्मः यस्मिन्वयं द्वेषं कुर्मः। आपो व्रीह्यादयश्चास्माकं साधुमि
त्रवदभीष्टकारिण्यो भवन्तु अस्मच्छत्रूणां च दुष्टमित्रवद्विरोधिन्यो भवन्त्विति मन्त्राशंसावाक्यार्थः २२ ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः
शतं जीवेम शरदः शतं शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् २३ इध्माङ्गिरा अथर्वण ऋषिः सूर्यो देवता ऽनु
ष्टुप्छन्दः पूर्ववद्विनियोगः। अस्यार्थः। तत्पश्येम किं तत् चक्षुः रवि त्रैलोक्यप्रकाशकत्वादादित्यमण्डलमित्यर्थः। तत्किंभूतं देवहितं देवानां हितं पुनः
किंभूतम् पुरस्तादुच्चरत् प्राच्यामुद्यत् पुनः किंभूतम् शुक्रं शुक्लं निर्मलमिति यावत्। अस्यादित्यस्य दर्शनाद्वयं शरदः शतं पश्येम जीवेम शरदः शतं शृ
णुयाम शरदः शतं यो ऽयं सर्ववेदमयश्चादित्यः प्रत्यहं प्राच्यामुदेति तत्प्रसादेन वयमविकलेन्द्रियाः शतं वर्षाणि जीवेमेति मन्त्राशंसावाक्यार्थः॥ २४॥ इ राम
ति शान्त्यध्यायः॥ ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधातु विश्वे देवास इह मादयन्तामो३ प्रतिष्ठ॥ अस्यार्थः ५०

द्रो देवता यजुषां छन्दो नास्ति पूर्ववद्विनियोगः। अयमर्थः। हे इन्द्र अनेन शान्तिकर्मणा मम धृते दृंह दृढीकुरु अत्र धृते मम यद्व्याघातं परिगृहीतं शरीर भार्यापु
त्रादि धनं परिगृहीतम् तत्र तत्र मा दृंह मखण्डितम् कुर्वित्यर्थः। किंच मा मां सर्वाणि भूतानि सर्वे प्राणिनः समीक्षन्ताम् पश्यन्तु किं न मित्रस्य चक्षुषा हिंस
कं भवति मित्रस्य चक्षुर्यथा हिंसकं न दृश्यते एवं चक्षुषा सर्वे प्राणिनो मां शुभदृष्ट्या पश्यन्त्वित्यर्थः। एवं सति सर्वप्राणिनो हञ्च मित्रस्य चक्षुषा अन्योन्यं स
मीक्षामहे हे इन्द्र मां शरीर भार्या पुत्रादिभिः संपूर्णं कुरु सर्वे प्राणिनो मां मित्रवत्पश्यन्तु अहमपि तान् मित्रवत्पश्यामीति याञ्चावाक्यार्थः। १७॥ ॐ धृ
ते दृंह मा ज्योक्ते संदृशि जीव्यासम् १८ दृंहेत्यङ्गाथर्वणऋषिरिन्द्रो देवता यजुश्छन्दो नास्ति पूर्ववद्विनियोगः। हे इन्द्र धृते दृंह माइति पूर्वकण्डिका
यामेव व्याख्यातं पुनर्वचनमादरार्थं किंच ते तव संदृशि सन्दर्शने सति ज्योक् चिरं जीव्यासम् अहं जीवेयम्। अत्रापि पुनर्वचनमादरार्थम्। त्वया दृष्टो
गुणैरजीवेयमित्याशंसावाक्यार्थः १८ ॐ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे अन्यांस्ते अस्मत्तपन्तु हेतयः। पावको अस्मभ्यं शिवो भव १९ ऋषिपु
त्रौ लोपामुद्राऋषिरग्निर्देवता बृहती छन्दः पूर्ववद्विनियोगः। अयमर्थः हे अग्ने ते तुभ्यं नमोऽस्त्वित्युत्तरत्रावस्थितमत्रापि योज्यम्॥ किंभूताय तुभ्यम्
हरसे हृतस्य हर्त्रे किंभूताय शोचिषे दीप्तिकारिणे तथा अर्चिषे अर्चिस्वरूपाय ते तुभ्यं नमोऽस्तु किंभूतेन तव हेतयो ज्वाला अस्मदन्यान् विरुद्धान् तपन्तु
दहन्तु न केवलमेव त्वं पावकः सन्नस्मभ्यं शिवः कल्याणो भव एतदर्थं त्वं नमस्कृतोऽग्निरस्माकं विरुद्धान् दहत्वस्माकं कल्याणो भवत्वित्याशंसावा
र्थः। अत्र हरसे इति हञ् हरणे इत्यस्य सर्वधातुभ्योऽसुन्नित्यसुन्प्रत्ययः १९ नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे। नमस्ते भगवन्नस्तु यतः स्वः समी
२० दध्यङ्ङाथर्वणऋषिरनुष्टुप् छन्द इन्द्रो देवता पूर्ववद्विनियोगः हे इंद्र ते तुभ्यं नमोऽस्तु किंभूताय विद्युते विद्युद्रूपाय तथा स्तनयित्नवे मेघरूपा
य नमः तथा हे भगवन् सकलैश्वर्यशालिन् ते तुभ्यं नमोऽस्तु केन कारणेन त्वं नमस्क्रियसे यतः कारणात् स्वः स्वर्गं दातुं समीहसे चेष्टसे दातुमि

श्रा॰स॰ ५२ तिर्योन्यो ध्यापक आगच्छेत्तस्मिन्काले तमर्चयित्वा श्रीयात् हृषिर्हृतिरपि ब्राह्मणो ऽध्वनश्रान्तुस्तनमादृते। पर्य्यश्नन्तः पूजां कुर्वन्ति। वा रुद्रुरितेनेना।
न्नयः श्राम्यन्ति तस्माद्गृहिणाग्निर्न्नो नृतवादीनपूर्वाशीना स्तत्कृवाक्याभिधायी भवेत्। एवमाह। अपि शाकं पचानस्य शिलोञ्छेनापि जीवतः। तुक्कान
स्याग्निहोत्रन्तु नातिथिर्विमना भवेत्। अग्नयो ऽतिथिमिच्छन्ति सोऽतिथिः स्वर्गमिच्छति। स्वयमिच्छति दातारं सम्यक्सुकृतकारिणम्। प्रार्थयन्तेप
श्यास्सर्वे निपानं मृगपक्षिणः। एवं गृहस्थं संपन्नं प्रार्थयन्ती हसाधनः। आतिथ्याधिकारे हारीतः। न स्वैष यदाह स्वागतमिति गृहदेवता स्तेन प्रीणा
ति। यस्मादृसेचनं कुरुते पितृस्तेन प्रीणाति यदन्नेनातिथिं पूजयति प्रजापतिं तेन प्रीणाति यदेनयान्तमनुयाति श्रैयसोऽद्महाव वेसन्ते नसर्वान्कामा
न वाप्नोति। मनुः। एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः। अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते। याज्ञवल्क्यः। अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपा
४ रगः। मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः। पाराशरः। अविज्ञातमनाहूतं देशकाल उपस्थितम्। अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः। त
श्यास्तु पार्श्वस्थ षितः श्रान्तो वैश्वदेवान्तमागतः। तं पूजयेद्यत्नेन सोऽतिथिः स्वर्गसंक्रमः। मनुः। नैकग्रामीणमतिथिं विप्रं सांगतिकं तथा। उपस्थितं गृ
हे विद्याद्भार्या यत्राग्नयोऽपि वा। शंखः। न यज्ञैर्दक्षिणावद्भिर्वह्निशुश्रूषया तथा। गृही स्वर्गमवाप्नोति यथा चातिथिपूजनात्। यमः। नाग्निहोत्रेण दानेन नोपवा
सफलेन च। देवताः परितुष्यन्ति यथा चातिथिपूजनात्। पुनर्यमः। विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी। तावत्पुष्करपात्रेण पिवन्ति पितरो जलम्
। यस्मादध्वरिवन्नाः पथिका गृहमायान्ति कर्षिताः। पूजयेत्तृणभूम्याद्यैः वितरन्ते न पुत्रिणः। बौधायनः। यद्वा बहूनां न शक्नुयादेकस्मै गुणवते दद्यात् यो वा प्रथ
ममागतः स्यात्। पैठीनसिः। स विशेषतो नमस्तिथये दद्यात्। पुत्रं जातमुद्दीक्षन्ते श्रोत्रियं भोजयिष्यतीति। वदन्ति पितरः पितामहाः प्रपितामहाश्च स्वागते रा॰
नाग्निरासनेनेन्द्रः पितरः पाद्येनान्नाद्येन [illegible] पितरः पादशौचेन भोजनेन प्रजापतिः। मनुः। अप्रणोद्योऽति ५२

जवन्तं स्वस्थानं पाहीति प्रेरणं वाक्यार्थः॥ ॐ नमो ब्रह्मणे नमोस्त्वग्नये नमः पृथिव्यै नमः ओषधीभ्यो नमो वाचे नमो वाचस्पतये नमो विष्णवे महते
करोमित्यापस्तंबीयो मन्त्रः। अस्यार्थः। ॐकारो स्मरणार्थः मङ्गलार्थो वा इदं शान्तिकर्मारब्धं भवत्वित्यर्थः। ब्रह्मणे नमोस्त्वग्नये नमोस्तु पृथिव्यै नमो
स्त्वोषधीभ्यो व्रीह्यादिभ्यो नमोस्तु वाचस्पतये नमोस्तु विष्णवे नमस्करोमि महते महतत्त्वाय नमस्करोमि अनेन शान्तिकर्म्मणा समाभ्युदयसिद्ध्यर्थं व्रीह्यादी
न्नमस्करोमीति वाक्यार्थः १ ॐ यद्देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ। अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम्॥
मरुच्छेदऋषिस्त्रिष्टुप्छन्दो विश्वेदेवा देवता आश्रयग्रहणे विनियोगः। अस्यार्थः। हे देवासः देवाः ये यूयं दिवि स्वर्गे एकादश स्थ एकादशकोटिसंख्याः स्थ यत
था पृथिव्यामधि पृथिव्युपरि एकादश स्थ तथा अप्सु क्षितः अप्सु निवेशरूपः शब्द आकाशवाची क्षितः स्थिताः आकाशस्था इत्यर्थः। एकादशकोटिसं
ख्याः ये केन स्थिताः महिना महिम्ना माहात्म्येनेत्यर्थः। हे देवासः इमं यज्ञं शान्तिकरणरूपं यूयं जुषध्वं सेवध्वम्। स्वर्गे कोशपृथिवीस्था स्वयस्थि
शत्कोटिसंख्या देवा इदं शान्तिकर्म्माधिष्ठाय सावधानाः प्रभुदयं कुर्वन्त्विति अभ्यर्थना वाक्यार्थः। इत्यावसथिकमलधर्माधिष्ठान श्रीहलायुधविरचिते ब्रा
ह्मणसर्वस्वे वैश्वदेवशान्त्यध्यायव्याख्या॥ अथातिथिपूजा॥ तत्र मनुः वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत्। तस्माप्यन्नं यथाशक्ति प्रदद्यान्न ब
लिं हरेत्। शातातपपाराशरौ। प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव च। वैश्वदेवे तु संप्राप्तः सोऽतिथिः स्वर्गसङ्क्रमः। बलिदानानन्तरं विष्णुपुराणे
ततो गोदोहमात्रं वै कालं तिष्ठेद्गृहाङ्गणे। अतिथिग्रहणार्थाय तदूर्ध्वं वा यथेच्छया। अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना। तथासनप्रदानेन पादप्रक्षा
लनेन च। श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च। गच्छतश्चानुयानेन प्रीतिमुत्पादयेद्गृही। अज्ञातकुलनामानमन्यतः समुपागतम्। पूजयेदतिथिं स
म्यगेकग्रामनिवासिनम्। बलिदानानन्तरं शङ्खलिखितौ। आगोदोहनमात्रं कालमाकाङ्क्षेत्। अतिथिं श्रोत्रियो ऽरेव तीयति धर्म्मनैष्ठिकः। समान ग्रा

दं बर्हिरिति आङ् कर्म्मप्रवचनीयः इत्यनेन सप्तम्यर्थे द्वितीया। यवविकरणानन्तरं जपः। तथा च कात्यायनः। अवकीर्य विश्वेदेवाः शृणुतेममिति
जपित्वेति। अत्र सुहोत्रऋषिस्त्रिष्टुप्छन्दो विश्वेदेवा देवताः सर्वमेधे वैश्वदेवग्रहणे विनियोगः। मन्त्रो यथा। ॐ विश्वेदेवाः शृणुतेमं हवं मे ये अन्त
रिक्ष य उप द्यवि ष्ठ ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम्॥२॥ अस्यार्थः। हे विश्वेदेवा यूयं मे मम इमं हवमाह्वानं शृणुत किं
भूता यूयं ये अन्तरिक्षे आकाशे स्थिति ष्ठ तथा ये उपसमीपे पृथिव्यां द्यवि स्वर्गे हृयोः स्थ इत्यनेनैव संबन्धः। एतदुक्तं भवति। भूमौ वाकाशे स्वर्गे च ये
स्थिता विश्वेदेवाः के ते ये अग्निजिह्वाः अग्निजिह्वा हविर्भोजनसाधनं येषां उत वा अपि वा ये यजत्राः यजन्तं श्राद्धकारिणं त्रायन्त इति यजत्राः उ
रोरवो माद्रव प्रभृतयः। ते यूयमस्मिन्सदने बर्हिषि कुशे आसाद्य उपविश्य मादयध्वम् मद हर्षे सततयुक्ता भवत। मादयध्वमिति स्वार्थे णिच्। श्राद्धे
च देवा रक्षितार इत्यत्र तेषामारक्षभूतत्वात् दैवपूर्वं योजयेदिति मनुप्रमाणम्। एतज्जपानन्तरं पितॄणामावाहनम्। यथाह कात्यायनः। उशन्तस्त्वेत्यन
यावाह्येति। तत्र शंखऋषिरनुष्टुप्छन्दः पितरो देवता आसने ब्राह्मणानामुपस्थाने विनियोगः। मन्त्रो यथा। ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उ
शन्नुशत आवह पितॄन्हविषे अत्तवे। अग्निर्देवतो मन्त्रः। तेनायमर्थः। हे अग्ने त्वा त्वां निधीमहि आदधीमहि आधानं कुर्म्मः इति यावत् वयमित्यध्या
हार्य्यम्। किंभूता वयम्। उशन्तस्त्वामिच्छन्तः। किं च उशन्त एव वयं त्वां समिधीमहि ज्वालयामः। त्वञ्चास्माभिराहितो ज्वालितश्च पितॄनग्निष्वात्तादीना
वह आवाहय आनयेत्यर्थः। किंभूतस्त्वं उशन् पितॄनिच्छन्। किंभूतान् पितॄनुशत इच्छतः। किमर्थमावाहनमित्यत आह। हविषे अस्मद्दत्तहवि
षः अत्तवे अदनार्थम्। हे अग्ने अस्माभिराधानज्वालनाभ्यामाराधितस्त्वमस्माकं पितॄन् श्राद्धदेयस्य हविषो भक्षणायानयेत्यन्वयो गौणप्रार्थनावाक्यार्थः।
स्माधनञ्च तर्पणप्रस्तावस्य वक्तनम्। आवाहनानन्तरं जपः। आयान्तु नः। अवकीर्य। एतेन इति जपेत्। तत्र शंखऋषिस्त्रिष्टुप्छन्दः पितरो दे

यं सूर्योढो गृहमेधिनाम्। काले प्राप्ते त्वकाले वा नाश्नन्नन्नगृहे वसेत्॥ तथा शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः। सर्वं स्वंकृत
ब्राह्मणोऽनर्चितो वसन्। तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता। एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन। विष्णुपुराणे। दिवातिथौ तु विमुखे ग
ते यत्पातकं नृणाम्। तदेवाष्टगुणं पुंसां सूर्योढे विमुखे गते। इत्यतिथिपूजाप्रकरणम्। लक्ष्मणक्षोणिपालस्य धर्माध्यक्षो हलायुधः॥ निखिलश्राद्ध
मन्त्राणां व्याख्यां व्याख्यापितवानिमाम्॥ अथ श्राद्धमन्त्रव्याख्या। तत्र यद्यपि नित्याह्निकप्रसङ्गवशात्प्रथमतो नित्यश्राद्धं व्याख्येयं कर्तुं युज्यते तथा
पि सर्वेषामेवान्येषां सपिण्डीकरणनित्यश्राद्धैकोद्दिष्टश्राद्धादीनां प्रकृतिभूतं सर्वप्रधानं पार्वणश्राद्धविध्यन्तर्भावेत्वेन पार्वणश्राद्धमन्त्रव्या
ख्यानादेव सकलनित्यनैमित्तिककाम्यश्राद्धमन्त्रव्याख्यानस्य सिद्धिरतः पार्वणश्राद्धमन्त्रव्याख्यानमेव प्रथमतः क्रियते। ये तु सपिण्डीकर
णवृद्धिश्राद्धयोर्मन्त्रा अत्र न प्राप्यन्ते ते प्यस्यैव शेषे व्याख्यायन्ते। अथ पार्वणश्राद्धम्। तत्र कुशासनदानानन्तरं विश्वेदेवानामावाहनम्। आसनेषु द
र्भानास्तीर्य विश्वान्देवानहमावाहयिष्ये इति पृच्छति आवाहयेत्यनुज्ञातो विश्वेदेवास इति यवानवकीर्याथ भाजने सपवित्रके इति। याज्ञवल्क्यः
आवाहयेदनुज्ञातो विश्वेदेवास आगत इत्यनयर्चावाहयेदिति। कात्यायनः। तत्र गृत्समद ऋषिर्गायत्री छन्दो विश्वेदेवो देवता अग्निष्टोमे वैश्वदेवग्रह
नि णे विनियोगः। मन्त्रो यथा। ॐ विश्वेदेवास आगत शृणुता म इमं हवम्। एदं बर्हिर्निषीदत॥ १॥ अस्यार्थः। हे विश्वेदेवासः यूयं मे मम इदं हवमाह्वानं
शृणुत आश्रुत्य चागत आगच्छत आगम्य इदं बर्हिः कुशे आनिषीदत आसनार्थमुपकल्पिते बर्हिषि निविष्टा भवतेत्यर्थः॥ अत्र विश्वेदेवास इति संबोध
ने प्रथमा बहुवचने आज्जसेरसुगित्यसुगागमेन रूपम्॥ शृणुतेत्यत्र तस्य तादिति तकारस्य स्थाने तादेशः॥ आगतेति आगच्छत इत्यत्र वर्णाग
मो वर्णविपर्ययश्चेति छकारलोपः आनिषीदतेति छन्दसि परेऽपि व्यवहिताश्चेति पाणिनिस्मरणाद्व्यवहितेनाङा निषीदतेत्यस्य संबन्धः॥ ३

श्रा॰स॰
१६

मः। एषां मन्त्राणामर्थः। हे पितरः वो युष्मभ्यं नमः शुष्माय च नमः शोषणकारिणे ग्रीष्मायेत्यर्थः। हे पितरः वो युष्मभ्यं नमः तपसे च तप इति माघमा
सस्य नाम तेन माघफाल्गुनात्मकशिशिरऋतुरेकादेशतदुद्भवेन तस्मै नमस्कारः कृतः। हे पितरः वो युष्मभ्यं नमः यज्जीवं जलं तस्मै नमः अनेन वर्षा
मस्कारः कृतः। हे पितरः वो युष्मभ्यं नमः रसाय च नमः रसः पुष्परसः तदुद्भवेन तत्कारणीभूतस्य वसन्तस्य नमस्कारः कृतः। हे पितरः वो युष्मभ्यं नम
घोराय मन्यवे च नमः हेमन्तायेत्यर्थः॥ हेमन्तस्य शीतप्रचुरत्वात्प्राणिनां भयहेतुत्वेन घोरः मन्यवे क्रुद्धाय यथा क्रुद्धः कश्चिद् दुःखं जनयति तथायम
पि शीतं दुःखं जनयतीत्यर्थः। हे पितरः वो युष्मभ्यं नमः स्वधायै शरदे। यथा श्रुतिः स्वधैव शरत्स्वधायै पितृणामन्नमिति। एभिः षड्भिर्नमस्कारैः पित
10
रस्तृप्ता भवन्ति ऋतवश्चेति तात्पर्यम्। षड्वा ऋतवः पितरश्चेति प्रतिपादितेन ऋतुभिस्सह पितृणामभेदेनोभयनमस्कारः कृत इति वाक्यार्थः। एतद्
इत्युपास्थेति सूत्राणि प्रति पिण्डमिति कात्यायनः। तत्र प्रजापतिरृषिः पितरो देवता यजुष्ट्वाच्छन्दो नास्ति पिण्डपितृयज्ञे वस्त्रदाने विनियोगः। मन्त्रो य
था। ॐ एतद्वः पितरो वासः। अस्यार्थः। पितरः वो युष्मभ्यं एतद्वासः आच्छादनम्। ऊर्जं बिभ्रतीरित्यापो निषिञ्चति इति कात्यायनः। तत्र प्रजापतिरृषिरापो
ति
देवता त्रिष्टुप् छन्दः पिण्डपितृयज्ञे विनियोगः। मन्त्रो यथा। ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन्। अस्यार्थः
। हे आपः यूयं स्वधास्थ पितृणामन्नं भवथ स्वसामर्थ्यीयधानेपोषणमनेनेति स्वधा। तथा च श्रुतिः स्वधा वै पितृणामन्नमिति। ततश्च मे मम पितॄन् तर्पयत इ
ति तृप्तान् कुरुत किंभूता यूयं ऊर्जं वहन्तो अन्नं वहन्त्यः प्रापयन्त्यः किंभूतमूर्जं अमृतं घृतमित्यादि परिस्रुतमित्यन्तमूर्जो विशेषणानि। अमृतं देवा
नामन्नमिति घृतं प्रसिद्धं पयो दुग्धं कीलालं पशुकीलं बन्धनमलं योग्यमन्नमस्येति कीलालः पशुः परिस्रुतं स्वधा। एतच्चामृतादिपञ्चकमूर्जः शब्दाभिधे राम
यम्। ऊर्जं चान्नमेव। यथा च श्रुतिः यस्माद्यावन्मात्र इवान्नमस्ति सर्वमेवान्नं भवतीति। यतो यूयं नानाविधमन्नं वहन्त्यः स्वधा भवथ तस्मान्मम १६

धुमदस्तु पृथिवी मधुमती भवत्वित्यर्थः। द्यौः स्वर्गः मध्वस्तु मधुमती भवतु किंभूता द्यौः। पिता पितेव सर्वस्य स्यानुकूला अत्रापि नइति सर्वत्रैव योज्य
म्। वनस्पतिर्नोः मधुमानस्तु वनस्पतिः सोमः सूर्यश्च मधुमानस्तु गावो नः माध्वीर्भवन्तु। अत्र नता यतइति निघण्टौ प्रापणार्थः। नत धातो लो टप्रत्यये
कृते तिङा तिङो भवन्तीति बहुवचनस्थाने एकवचनेन नता यत इति रूपम्। तथा स्वरन्तीति आशंसायां लेट्। माध्वीरोषधी रित्यत्र सुपां सुपो भवन्ती
ति प्रथमा बहुवचनस्थाने द्वितीया बहुवचनम्। अस्य कण्डिकात्रयस्य वाच्यादि सर्वमेतद् स्तृप्ति पितॄणां मधुमयं भवत्वित्याशंसा वाक्यार्थः। अपहता
इति द्व्यमृतानमेव। पिण्डदानानन्तरमत्र पितरइत्युक्त्वा उदङ्मुखो ईति कात्यायनः। अत्र प्रजापतिर्ऋषिः पितरो देवता बृहती छन्दः पिण्डपितृयज्ञे जपे
विनियोगः। मन्त्रो यथा। ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्। अस्यार्थः। हे पितरः अत्र मादयध्व अत्र पिण्डेषु रसयुक्ता भवत। किं च यथाभाग
मावृषायध्वं स्वं स्वं भागं प्राप्य वृषा इव बलिनो भवत। अत्र आङ् पूर्वाद् वृष शब्दात् कर्तुः क्यङ् सलोपश्चेति क्यङ् प्रत्ययः। स्वेच्छया पितॄणां पिण्डोपभोगा
र्थं अभ्यर्थना वाक्यार्थः। आहृत्यामीमदन्तेति जपतीति कात्यायनः। अत्र प्रजापतिर्ऋषिः पितरो देवता यजुषां छन्दो नास्ति पिण्डपितृयज्ञे विनियोगः। म
न्त्रो यथा। ॐ अमीमदन्त पितरो यथाभागमावृषायिषत। अस्यार्थः। पितरः अमीमदन्त मदं प्राप्नुवन्तः मदनेन पिण्डेन हर्षयुक्ता भवतइत्यर्थः। किं च य
थाभागं आवृषायिषत स्वं स्वं भागं प्राप्य वृषा इव बलिनो भूताः। अमीमदन्तेति मदी हर्षग्लपनयोरित्यस्माद्धातोः स्वार्थिक णिजन्ताच्चलङि रूपम्। पू
र्वमन्त्रकृते ऽभ्यर्थने सम्प्रतीत्युत्तरवाक्यार्थः। नीवीं विस्रस्य नमो वइत्यञ्जलीन्करोतीति कात्यायनः। तत्र षण्णां मन्त्राणां प्रजापतिर्ऋषिर्यथासंख्य
न्दो क्रमात्। शिशिरवसन्तहेमन्तशरदः षड् ऋतवो देवता यजुषां छन्दो नास्ति पिण्डपितृयज्ञे षडञ्जलिकरणे विनियोगः। मन्त्रो यथा ॐ नमो वः पितरः शु
ष्माय नमो वः पितरस्तपसे नमो वः पितरो जीवनस्येन नमो वः पितरो रसायन नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः स्वधायै व पितरो न

पितॄन्तर्पयतेति वाक्यार्थः। वहन्तीति सुपां सुपो भवन्तीति प्रथमा बहुवचनस्थाने द्वितीया बहुवचनम्। आधत्तेति मध्यमं पिण्डं प्राश्नाति पुः-
कस्यायनः। अत्र प्रजापतिऋषिः पितरो देवता गायत्री छन्दः पिण्डप्रतिपत्ते पत्नीमध्यमपिण्डप्राशने विनियोगः। मन्त्रो यथा। ॐ आधत्त पितरो गर्भं कु-
मारं पुष्करस्रजं यथेह पुरुषोऽसत्। अस्यार्थः। हे पितरः गर्भमाधत्त किंभूतं कुमारं पुत्रं तमपि किंभूतं पुष्करस्रजं पुष्करस्य पद्मस्य स्रङ्माला अन
योरिति पुष्करस्रजौ अश्विनौ कुमारौ ताविव पुष्करस्रजं दीर्घायुषं निरुजं सुरूपं चेत्यर्थः। यथा इह पुरुषोऽसत् येन प्रकारेण इहैव ऋतौ पुरुषो देवपि
तृमनुष्याणामभीष्टपूरयिता भूयात्। तथा गर्भमाधत्तेत्यभिप्रायः। असदिति अस्भुवीत्यस्माद्धातोर्लिङि प्रथमपुरुषैकवचनं शप्तस्य बहुलं छन्दसीति लु- ति
ग्भवति। आगमानुशासनस्यानित्यत्वाद्यासुडागमो न भवति। वाजे वाजे इति विसृज्येति कात्यायनः। तत्र वशिष्ठऋषिस्त्रिष्टुप्छन्दः अग्निर्देवता वा-
जपेयवाहे स्यात्यज्ञे विनियोगः। मन्त्रो यथा। ॐ वाजे वाजेऽवत वाजिनो धनेषु विप्रा अमृता ऋतज्ञाः अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देव
यानैः। अस्यार्थः। हे वाजिनः पितरः वाजोऽन्नमस्यास्तीति वाजी तत्सम्बोधने हे दत्तं पितॄणामस्तीति पितर एव वाजिनो वत रक्षत नश्च नोऽस्माकं वाजे वाजे अन्ने
अन्ने यद्यद्देवास्माकं हन्तकं तत्सर्वं त्वान्नमश्नाद्यर्थं सुपस्थापितं तत्र सर्वत्र न केवलं तत्र धनेषु च अन्नातिरिक्तश्राद्धीयद्रव्येषु च किंभूता यूयं विप्राः विप्रम्-
नेयो विप्रदेहस्थाइतियावत् अपि किंभूताः अमृताः अमरणधर्माणः पुनः किंभूताः ऋतज्ञाः सम्यग्ज्ञानशालिनः रक्षित्वा च अस्य मध्वः पिबत एत
रन्नसंबन्धिनो मध्वः रसस्य पिबत पीत्वा च मादयध्वं तृप्यध्वं तृप्ताः सन्तः पथिभिर्यात वर्त्मभिर्गच्छत किंभूतैः देवयानैः यैर्वर्त्मभिर्देवा यान्ति तैरि-
त्यर्थः। अयं वाक्यार्थः। हे पितरो विप्रदेहा अस्माकं श्राद्धे दत्तमन्नं रसन्तरसितवा च तस्य रसं पीत्वा तृप्ताः सन्तो देवोन्ति... वर्त्मभिः स्वर्गं गच्छतेति
मध्व इति मधुशब्दस्य षष्ठ्येकवचने रूपं आगमानुशासनानित्यत्वान्नुमभवति सञ्ज्ञापूर्वकविधेरनित्यत्वाद्गुणो ... वतीति ॥ आमावाज

२०६

श्रा॰स॰
५७

त्पुत्रश्च प्रदक्षिणीकृत्य प्रविशेदिति कात्यायनः। तत्र बृहस्पतीन्द्रावृषी त्रिष्टुप्छन्दः प्रजापतिर्देवता वाजपेये यजमानस्यानेनैव पथागमने विनियोगः। मन्त्रो यथा। ॐ आमा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे। आमा गन्तां पितरा मातरा चा मा सोमो अमृतत्वाय गम्यात्। अस्यार्थः। वाजस्यान्नस्य प्रसवः फलं मां जगम्यात्पुनःपुनरागच्छतु अस्मिन्नश्राद्धे कृतस्यान्नदानस्य फलं मां प्रत्यागच्छत्वित्यर्थः। ... इमे द्यावापृथिवी मां मां गम्यात्तां पुनरागच्छतां किंभूते द्यावापृथिवी। विश्वरूपे विश्वं सर्वं रूपं ययोस्ते विश्वरूपे एतेन पृथिवीसंबन्धि कल्याणं स्वर्गसंबन्धि च मां मामागच्छतु इति आशंसा वाक्यार्थः। किंच हे पितरा मातरा पुत्र पुत्रां माम् ... आगच्छन्तां यदा यदाहं श्राद्धं करोमि तदा तदा मम माता पितरौ आगच्छतामित्यर्थः। किंच सोमः पितॄणां राजा मा मामागम्यात् आगच्छतु ... मर्थम् अमृतत्वाय मोक्षाय श्राद्धं कृत्वा विसर्जितेषु पितृष्वनुव्रजनेऽक्रियमाणे श्राद्धस्य फलं मम भवतु पार्थिवं सुखं मम भवतु स्वर्गं मम भवतु ... अथ मम मातापितरौ आगच्छतां मोक्षश्च मम भवत्विति आशंसा वाक्यार्थः॥ आ जगम्यादिति गम्ल गतौ इत्यस्माल्लोटो मध्यमैकवचनस्य स्थाने आङ्पूर्वस्य यङ्लुकि आशिषि लिङि कृते रूपम्। एतदेव वचन परिणामेन द्विवचनान्तं जगम्यादित्यस्य पूर्वपठितेन आ इत्यनेन संबन्धः द्यावापृथिवी इत्यत्रापि संबध्यते। आगन्तामित्यत्र व्यवहितेन आ इत्यनेन संबन्धः बहुलं छन्दसीति शपो लुक्। पितरामातरा इति माता पितरौ इति प्राप्ते पितरा मातरा छन्दसीति निपातः सुपामिति प्रथमायाश्च द्विवचने भाषायामिति ... विषये आकारस्य विधानात्। अत्र छान्दसपदे आकारोन ... ... मोक्षभवनेच्छः आमा सोमो अमृतत्वाय गम्यादित्यत्र व्यवहितेन आ इत्यस्य गम्यादित्यस्य संबंधः। इति पार्वणश्राद्धम्॥ प्रेतपात्रं पितृपात्रे ... ... ... ये समानाइति द्वाभ्यामिति सपिण्डने कात्यायनः। तत्र प्रजापतिऋषिः ... अनुष्टुप्छन्दः सौत्रामण्यां गृह होमे विनियोगः। मन्त्रो यथा ... ये समानाः समनसः ... ... ... नां लोकः स्वधा नमो यज्ञो देवे ...

ग्रा·स· ६४

तेमांकस्मैदेवायहविषाविधेम॥अस्यार्थः।हिरण्यगर्भःहिरण्यगर्भाख्यःपुरुषःसमवर्ततसमभवत्अग्रेप्रथमंयोहिरण्यगर्भोजातोजातमात्रोभू
तस्यप्राणिजातस्यएकोऽद्वितीयःपतिरासीत्स्वामीवभूवेत्यर्थःएवंभूतःसपृथिवींदाधारधृतवान्नकेवलंपृथिवींउतइमांद्यांअन्तरीक्षंएवंभूताय
कस्मैकायप्रजापतयेदेवायहविषाहविर्विधेमदद्मः अत्रसदाधारइतिरधारइतिप्राप्तेआकारश्छान्दसःकायइतिप्राप्तेस्मायादेशश्छान्दसःहविषे
तिद्वितीयास्थानेतृतीयाअयंवाक्यार्थः॥योहिरण्यगर्भएकएवप्राणिजातस्यप्रभुःपृथिवीमन्तरीक्षञ्चधारयतितस्मैप्रजापतिमूर्तयेहविरर्पयामी
तेइतिप्रजापतेःस्तुतिः।नारायणऋषिर्जगतीजपुरुषोदेवताअनुष्टुप्छन्दःपुरुषमेधेआदित्योपस्थानेविनियोगः।मन्त्रोयथा॥ॐअद्भ्यःसंभृतः
पृथिव्यैरसाच्चविश्वकर्मणःसमवर्तताग्रे॥तस्यत्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्वमाजानमग्रे।अस्यार्थः।योविष्णुःअग्रेप्रथमंअद्भ्यःजलां
त्पृथिव्यैच पृथिव्याअपिचकारोभिन्नक्रमः।संभूतःसमवर्ततउत्पन्नोऽभवत्जलपृथिव्योरुपादानंपञ्चभूतोपलक्षणार्थंकुतोनिमित्तकारणात्
रसात्कामात्सिसृक्षारूपात्वि क र्मणःविश्वंसर्वकर्मयस्यविष्णोरूपंमूर्तिंविदधत्धारयन्त्वष्टाआदित्यःअग्रेपुरतःसर्वेषामपरोक्षंइत्यर्थः
।यएतिआगच्छतितद्रूपंमर्त्यस्यमनुष्यस्यदेवत्वेनैवभवतिकिंभूतंअजानंयावज्जीवम्।विष्णुःसृष्ट्यादौपञ्चमहाभूतेभ्यउपादानकारणेभ्यःसिसृ
क्षायांनिमित्तकारणात्प्राप्यउत्पद्यततस्तुआदित्यःतस्यविष्णोर्येद्रूपंधारयन्गच्छतीतिसर्वेषांप्रत्यक्षंतद्रूपंमनुष्यस्यदेवत्वेनभवतीतिवाक्यार्थः॥
।तत्रपृथिव्यैइतिपञ्चम्यर्थेचतुर्थीदेवत्वमितितृतीयार्थेद्वितीयाइत्थंभूतप्रजापतिरस्मिन्गर्भेस्वविधानंकरोत्वित्यभिप्रेत्याभ्यांमन्त्राभ्यांपुंसव
नेनसंदीयते॥पुनःपारस्करः॥कूर्मपृष्ठरोमहेष्टलासपरिक्रामयेद्वीर्यवान्स्यादितिविष्टनमभिमन्त्रयेत्॥सुपर्णोसीत्यादिपत्तुपस्थसत्रि
धोपानीयमुपस्थाप्यअभिमन्त्रयेदनेन।प्रजापतिर्ऋषिर्गरुडोदेवताआकृतिश्छन्दश्वयनस्यानाभिमन्त्रणेविनियोगः।मन्त्रोयथा॥ॐसु ग्रास ६४

१२

वामविकलेन्द्रियौ शतं वर्षाणि जीवाव इत्याशंसावाक्यार्थः पश्येम जीवेम शृणुयाम इति निङन्तिङो भवन्तीति उत्तमपुरुषद्विवचने बहुवचनम्॥पुनः पार
स्करः॥सा यदि गर्भं न दधाति तदा सिंह्याः श्वेतपुष्प्या उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थी स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायाम
सिञ्चति इयमोषधीत्यादि। यदि निषेके सत्यपि गर्भो न भवति तदा पुनर्वसुनक्षत्रे दिवसे उपवासं कृत्वा पुष्यनक्षत्रदिवसे श्वेतपुष्पकण्टकारिकामू
लमुत्थाप्य स्थापयेदृतनृक्तुस्नातायां निशायां तन्मूलं जलेन पिष्ट्वा तेन पत्न्या नस्यं दद्यादिति पतिपठितेन मन्त्रेण॥ॐ इयमोषधी त्रायमाणा सहमा
ना सरस्वती। अस्या बृहत्याः पुत्रः पितुरिव नाम जग्रभत्। अस्यार्थः। इयं बृहती ओषधी व्याधिनाशकरी किंभूता त्रायमाणा रक्षाकरी पुनः किंभूता सह
माना उत्पन्नदोषमाकर्षणकरी पुनः किंभूता सरस्वती वाक्प्रसारहेतुः अस्यां बृहत्यां कण्टकारिकायां पुत्रः नाम जग्रभत् प्रकाशत्वं गृह्णातु। किंभू
तं नाम पितुरिव पितृसदृशमित्यर्थः। अत्र पूर्वार्द्धेन बृहतीस्तुतिः उत्तरार्द्धेन अस्याः पुत्रः प्रकाशत्वं लभतामित्याशंसावाक्यार्थः। जग्रभदिति ग्रह उपा
न इत्यस्माद्धातोर्हग्रहोर्भश्छन्दसीति हकारस्य भकारः॥इति गर्भाधानम्॥अथ पुंसवनम्। तत्र हारीतः। पुंसवनात् पुंसा करोति इति फलम्॥तथा ग
र्भाधानाद्यष्टौ संस्कारानभिधाय पुनः स एवाह। एतैरष्टभिर्गर्भसंस्कारैर्गर्भोपघातात् पूतो भवति॥तत्र पुंसवने पारस्करः॥अथ पुंसवनं पुरा स्यन्द
त इति मासे द्वितीये तृतीये वा यदहः पुंसा नक्षत्रेण चन्द्रमा युज्यते तदहरुपवास्याप्लाव्याहते वाससी परिधाप्य न्यग्रोधावरोहं शुङ्गीं श्च निशाया
मुदपेषं पिष्ट्वा पूर्ववद्दासेचनम्। ॐ हिरण्यगर्भोऽद्भ्य इत्येताभ्यां कुशकण्टकं सोमांशुं चैकत्र देवसनियथोक्तसमये वटावरोहशुङ्गं कुशकण्ट
कञ्च शिशिरजलेन पिष्ट्वा नववस्त्रद्वयपरिधानायाः पत्न्या नस्यं दद्यादिति पतिरेवाभ्यां मन्त्राभ्याम्॥हिरण्यगर्भेत्यृषिः प्रजापतिर्देवता त्रिष्टुप्छ
न्दः स्वयने हिरण्यपुरुषाधाने विनियोगः॥मन्त्रो यथा। ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामु..॥

ज्ञा॰स न शङ्कुना काण्डेन पूर्णचान्द्रेण सूत्रपूरितया कुड्या ॥ पुनः पारस्करः ॥ त्रिवृतमाबध्नाम्यमूर्ज्जाविनत्यादि ॥ अत्र त्रिवृतं वेणी ॥ पुनः पारस्करः तथा
६५ ह गीगाथिनौ राजानं संङ्गायेतां यो वाप्यन्यो वीरतरइति नियुक्तामध्ये के गाथामुपोद्दाहरन्ति ॥ सोम एवेमादि ॥ यान दीमुपवसिताको भवन्नित
स्या नाम ॥ अत्र नियुक्तामिति पूर्वाचार्य्यैर्विहिता ङ्गाथामपि पठेदित्यर्थः ॥ पुनः पारस्करः ततो ब्राह्मणभोजनम् ॥ एवं सति यथोक्ते समये प्राङ्गणे
पत्नी समेतः पतिरग्निस्थापनपूर्वकं चरुश्रपणादिकं कृत्वा आज्येन वाज्यभागौ हुत्वा चरुहोमं स्विष्टकृद्धोमञ्च कृत्वा पञ्चवारान् जुहुयादेभिर्म
न्त्रैः ॥ अग्निसरस्वती न्द्राङ्गऋषयोऽग्नीवरुणौ देवते त्रिष्टुप्छन्दः सौत्रामण्यां अवभृते स्नाने विनियोगः ॥ मन्त्रो यथा ॥ ॐ त्वन्नोऽग्ने वरुणस्य विद्वान्दे
वस्य हेलो अवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् ॥ अस्यार्थः ॥ हे अग्ने त्वं वरुणदेवस्य हेलः क्रोधं अस्मि
13 न् कर्म्मणि वैगुण्यजनितं अवयासिसीष्ठाः अपनय किंभूतस्त्वं नोऽस्मान् विद्वान् त्वमेवास्माकं कर्म्मसाक्षित्वेन अस्मान् जानासीत्यर्थः ॥ न केवलं त्वं व
रुणस्य क्रोधमपनय अस्मान् अस्मत् द्वेषांसि दौर्भाग्याणि च प्रमुमुग्धि प्रमोचय किंभूतानि विश्वा विश्वानि सर्वाणि किंभूतः यजिष्ठः यागे सातिश
य उत्तमः पुनः किंभूः वह्नितमः हविषां वहने प्रापणे सातिशयः पुनः किंभूतः शोशुचानः उत्तरोत्तरं दीप्यमानः हे अग्ने त्वं अस्मान् जानासि
अतोऽस्माकमस्मिन् कर्म्मणि प्रमादादिवैगुण्यकृतं वरुणक्रोधमपनय नोऽस्माकं दौर्भाग्यानि प्रमोचय इति प्रार्थनावाक्यार्थः ॥ हेलइति हल अनादर
इत्यस्य प्रयोगे द्वितीयैकवचने प्रथमैकवचनम् ॥ शोशुचानइति लिटः कानज्जिति कानचा रूपम् ॥ अग्निसरस्वती न्द्राङ्गऋषयोऽग्नीवरुणौ देवते त्रिष्टु
प्छन्दः सौत्रामण्यामवभृते स्नाने विनियोगः ॥ ॐ स त्वन्नोऽग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो राम
न एधि अस्यार्थः ॥ हे अग्ने त्वं अस्माकं अवमो भव अविकृतया पालयितृतमो भव सकः यस्त्वं ऊती नेदिष्ठः नित्यं पालकत्वेन सन्निहित इत्यर्थः ॥ क ६५

र्णोऽसि गरुत्मांस्त्रिवृत्ते शिरोः। गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ स्तोम आत्मा छन्दांस्यङ्गानि यजूंषि नाम साम ते तनुर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः
शफाः॥ सुपर्णोऽसि गरुत्मान् दिवं गच्छ स्वः पत॥ अस्यार्थः सुपर्णः॥ शोभनपर्णः शोभनपक्षः गरुत्मान् दूरगत्वादिगुणयोगेन प्रशस्तपक्षवान् त्रि-
वृत् ओंकारः त्रिवृत् शिरो मस्तकं गायत्रं साम ते चक्षुः बृहद्रथन्तरे सामनी ते पक्षौ स्तोमः स्तोमाख्यः पञ्चविंशतिसामानि ते आत्मा स्वरूपं छन्दांसि भ-
नुष्टुबादीनि ते अङ्गानि यजूंषि यजुर्वेदः ते नाम संज्ञा साम ते तनुः शरीरं कतमं वामदेव्यं यज्ञायज्ञियं साम ते पुच्छं लाङ्गूलं धिष्ण्या अग्नयः ते श-
फाः नखाः। यतस्त्वं सुपर्णोऽसि गरुत्मांश्च अतः दिवं आकाशं गच्छ यासि स्वः स्वर्गलोकं पत याहि अथवाकार्थः सुवर्णत्वादि गरुडधर्म्ममारोप्य वेदमाप-
स्त्वमसि अग्निः स्तूयते पुंसवने अग्निजलयोः कार्यकारणभेदाश्रयणेनाग्निस्तुत्या जलमेव स्तुतं गर्भवीर्यवत्त्वं करोति॥ इति पुंसवनम्॥ अथ सीमन्तो-
न्नयनम्। तत्र हारीतः। उन्नयनान्माता पितृजं पापं व्यपोहति। तथा गर्भाधानाद्यष्टसंस्काराणां प्रत्येकं फलमभिधाय हारीत एव पुनराह॥ एतैरष्टभि-
र्गर्भसंस्कारैर्गर्भोपघातात् पूतो भवति। पुंसवनवत् प्रथमगर्भे मासे षष्ठेऽष्टमे वा। अत्र पुंसवनवदिति पुंनक्षत्रयोगेन पत्नी स्नाता आहतवस्त्र इत्यपरि-
धानादिष्टाः प्रथमगर्भे इति च द्वितीयादिगर्भेषु सीमन्तोन्नयनसंस्कारनिषेधार्थः। यथाह हारीतः। सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियाः॥ यं यं ग-
र्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत्॥ पुनः पारस्करः। तिलमुद्गमिश्रं स्थालीपाकं श्रपयित्वा प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठ उपविष्टाया युग्मेन शला-
टुग्लप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जूलैस्त्रेण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण सीमन्तमूर्द्ध्वं विनयति भूर्भुवः स्वरिति प्रति महाव्याहृतिभिर्वा अत्र
मन्त्रपाठो मङ्गलपाठः युग्मेनेत्यादि युग्मसंख्यापक्षो दुम्बरफलस्तबकेन सार्द्रप्रादेशमात्रगर्भशून्यकुशपत्रद्वयं पिञ्जूलम्॥ यथा छन्दोपरिशिष्टं
अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च त्यभिधाय एतदेव हि पिञ्जूललक्षणं समुदाहृतमिति॥ त्रेण्या शलल्या इति त्रिश्वेतशलल्लीकीकण्टकेन वीरत-

ऋ.स. ङ्पूर्वः तस्याकारेण एकारादेशे सति वर्णव्यत्ययाद्ह्रस्वत्वं अयाइति सर्वे गत्यर्था ज्ञानार्था इति कृत्वा एति जानातीति अस्तु न्प्रत्ययेन रूपम्॥ ॐ
६६ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः॥ अस्यार्थः॥ हे वरुण ते तव ये शतं पाशाः
वितता विस्तीर्णा अपि च ये सहस्रं शतसहस्रयोरुपादानं अतिबहुत्वोपलक्षणार्थम्। किंभूता यज्ञियाय यज्ञेषु तथा भूता अनुष्ठानजनिताः अपि च।
किंभूता महान्तः सर्वलोकव्यापकभूताः तैः पाशैः नोऽस्मान् अद्य इदानीं सविता नकेवलं सविता उत विष्णुः विश्वेदेवा मरुतः वायवः स्वर्काः सुष्ठु
अर्काः आदित्याः मुंचन्तु मुक्तान् कुर्वन्तु अथवा वाक्यार्थः। अस्मिन् यज्ञकर्मणि यानि कानि चित्प्रमादादि कृतानि तथानु  ष्ठानजनितानि पापानि दुः
14 खहेतुरुपायोगी पापशब्दाभिधेयानि तैः पाशैः सवित्रादयो देवता अनया आहुत्या तोषिता अस्मान् मुक्तान्कुर्वन्तु तेभिरिति तृतीया बहुवचने बहुलं
छन्दसीति ऐसादेशनिषेधे बहुवचने इत्यल्पे दिग्मेतम्। शुनःशेप ऋषिर्वरुणो देवता त्रिष्टुप्छन्दः स्वयन्नशिस्रुकापाशरुङ्मोचने विनियोगः॥ म
न्त्रो यथा॥ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवानागसोऽदितये स्याम॥ अस्यार्थः॥ हे वरुण पाशं उदुत्तमं
अस्मत् अस्मत्तः उत्कृष्य अयह इह शिलथं कृत्वा नय अधमं पाशं अवश्रथय अर्वाचीनं श्रथयेति पूर्ववत्तद्वद् मध्यमं उत्तमाधमयोऽन्यत्। विश्रथय
स्वस्थानेऽवविशेषेया श्रयथ अथ कृते सति हे आदित्य अदितिपुत्र वरुण तव व्रते कर्मणि वर्त्तमाना वयं अनागसः अनपराधाः सन्तः अदितये अ
दीनतायै स्याम अदीना भवाम इत्यर्थः। हे वरुण उत्तमाधममध्यमपाशत्रयशलथीकरणमभ्यर्थ्य वा तृणज्ञानाचरणेन वयम् अदीना भवाम इत्याशंसा वा
क्यार्थः॥ अत्र श्रथायेति वलयोरेकत्वस्मरणात् लकारस्य रेफः अश्राय अथाव यमित्यत्र येऽपि आकार संहितायां छान्दसः अदितये इति दोऽव राम
खण्डने इत्यस्माद्धातोः क्तिन्प्रत्यये कृते दितिरिति रूपं न दितिरदितिस्तस्यै चतुर्थ्यां अदितये इत्यर्थः होमं समाप्य पत्न्यासीमन्तः शलाकी कण्ठ ६६

स्मिन् समयेअवमोभवअस्याउषसः।अस्यैवप्रभातस्यव्युष्टौसमाप्तौअस्मिन्नेवसमयेइत्यर्थः।नकेवलंनोस्मान्प्रतिएधिआगच्छ किंभूतःसूरःस।
स्वास्कानःआगत्यचवरुणंअवयस्वपूजय किंकुर्वन्नोस्माकंमृडीकंररराणः अस्मानसुखकरंहविर्ददानःपुनर्व्रीहोएतद्देवमस्यहेअग्नेयस्त्वलोक
पालनेननित्यंसन्निहितःसत्वमद्यास्माकंपालकोभवअस्मान्प्रतिआगत्यचअस्मदीयंहविर्ददानःवरुणंपूजयेस्वयमपिभक्षयेतिप्रार्थनावाक्या
र्थः।अवमअवरक्षणोइत्यस्यअवतममनमस्यतकारलोपश्छान्दसऊतीतिअवरक्षणोइत्यस्यऊतीयूतीतिसिद्धंअत्रतृतीयैकवचनेसुपांसुलुगादिना
कोनपूर्वसवर्णादेशेकृतेऊतीतिरूपम्॥ररराणइतिरालादानेइत्यस्ययङ्‌लुकिशपिरूपम्।मृडीकंमृडसुखनइत्यस्यौणादिकइकनप्रत्ययः॥अपा
श्याग्नेइत्यादिमन्त्रस्यप्रजापतिर्ऋषिर्गायत्रीच्छन्दोऽग्निर्देवताप्रायश्चित्तहोमेविनियोगः ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाअ।
सि॥अयानोयज्ञंवहास्ययानोधेहिभेषजम्॥अस्यार्थः॥हेअग्नेत्वंअयाश्चअसिप्राणिनांशुभावहोविधिरप्यसिअपरंअनभिशस्तिपाश्चअ।
सिअविद्यमानाअभिशस्तिर्याच्ञायस्यपुरुषस्यसोऽनभिशस्तिःतमपिपासिरक्षसिइतिअनभिशस्तिपाश्चत्वंअयमर्थः॥यस्त्वांरक्षणार्थेन
याचनेतस्यापित्वंमाहात्म्याद्रक्षकोभवसीतितादृश्यभूतस्त्वंअयाःआगच्छआगत्यनोऽस्माकंयज्ञंवहयद्विरेतद्भूतंनदेवान्प्रापयकिञ्च।
त्वंसत्यमित्सत्यमेवअयाअसिज्ञाताअसिजगत्संसारान्निस्तारोपायंजानासीत्यर्थः॥अतःकारणादपित्वअयाःआगच्छआगत्यचनोऽस्माकं
भेषजमधेहिअस्माकंनिस्तारोपायसौषधंपरिकल्पय॥यद्यपिशुभावहवाचीअयशब्दोऽकारान्तस्तथापिच्छान्दसःसकारान्तः।सत्यमिदि
तिइतशब्दोऽयमव्ययमवधारणार्थः।अयानोयज्ञंवहास्ययानोधेहिभेषजमित्यत्रअयाअया. इतिक्रियापदद्वयमनन्तार्थिकत्वद्योतनार्थं।
अयाइतिइणगतावित्यस्माल्लिङ्मध्यमपुरुषैकवचनेसिपइतिश्चलोपःपरस्मैपदेष्वितिइकारलोपःधातोर्गुणःलेटोऽडाटावित्याडागमः।आ

ढि: यथा वायुरेजति कम्पते। यथा समुद्र एजति कम्पते एवं यथायं गर्भः दशमास्यः संपूर्णकालीनः जरायुणा सह अस्तन् अधःपाती भवतु अत्र अस्त्र
दित्यस्त सु अधःपतने अस्माद्धातो राशंसायां लिङ् प्रथमपुरुषैकवचनं छन्दस्यपि दृश्यत इत्यडागमः आगमशासनस्यानित्यत्वाद्धूयासुडागमो न भव
ति किदाशिषीति लिङः कित्वादति दित्तामिति सूत्रेणानुनासिकलोपः स्कोः संयोगाद्योरन्ते चेति सकारलोपः इति सोष्यन्तीकर्म॥ पारस्करः। अथ
वापतनं अवैतु पृश्निरित्यादि। अपत्यप्रसवे भूते अथवा पतनार्थं इमं मन्त्रं जपति॥ अवैतु पृश्निः शेवलं शुने जरायु चत्तवे न मांसेन पीवं कस्मिंश्च
नायतनमजरायु पद्यतां अस्यार्थः जरायु अवैतु किमिव पृश्निः शेवलमेतयोरुपादानं दृष्टान्तार्थम् एतेनैतदुक्तं भवति यथा पृश्निः पक्वा शेवलं प्रसिद्ध
मेवमनेनकच्चिदपि असंलग्नं जलोपरिस्थितं स्वदुग्धभावादि प्रेरणो नाम्ययंगच्छति। यथा जरायुः सुखेनापगच्छतु कथं कारं नशुनेअजवे सुनोरन्ता
यथा न भवतीत्यर्थः। किंभूतं जरायु मांसेन पीवरी पुष्टं किंच जरायु कस्मिंश्चिदपयनात्कुत्राप्यस्थावयवे अपस्त्वं विलग्नं भवतु किंभूतं आमतं महतं उद
रे असंलग्नं जरायु सुखेन पतत्विति वाक्यार्थः। अत्र शुने इति षष्ठ्यर्थे चतुर्थी चत्तव इति अदभक्षणे इत्यत्र तुमर्थे से सेनित्यादिना सूत्रेण तवेङ् प्रत्यये
कृते रूपम् पीववीति लिङ्ग व्यत्यये स्त्रीत्वम् इत्यपत्यानयनम्। अथ जातकर्म तत्र हारीतः वोनावक्रगर्भोपघातः पञ्चगुणः जातकर्मणा प्रथममप्यो
हति तथा गर्भाधानाद्यष्टसंस्काराणां प्रत्येकं कमलमभिधाय हारीत एव पुनः सहस्रैरष्टभिर्गर्भसंस्कारैर्गर्भोपघातात्पूतो भवति तथा जातकर्मणि पा
र स्करः जातस्य कुमारस्याच्छिन्ना   यां नाड्यां मेधाजननार्थमास्ये करोति तथानामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा भूवस्त्वयि दधामी
— त्यादि तत्र कुमारस्य मेधाजननार्थं मधुघृतं प्राशयतीति चतुर्भिर्मन्त्रैः ॐ भूयस्त्वयि दधामि भूर्लोकं त्वयि दधामि ॐ भुवस्त्वयि दधामि भुवर्लोकम
न्तरिक्षं त्वयि दधामि अर्चयामि ॐ स्वस्त्वयि दधामि स्वर्लोकं तो दधामि ॐ भूर्भुवः स्वः सर्वं त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि तज्ज्योकत्रयोपलक्षित

एठकादिभिरूर्द्धसुखैः करोत्यनेन मन्त्रेण। ओं भूर्विनयामि भूर्लोकं विनयामि पृथक्करोमि। ओं भुवो विनयामि भुवो लोकं अन्तरिक्षं विनयामि पृथक्करोमि ओं
स्वर्विनयामि स्वर्लोकं पृथक्करोमि। पुंसवने हिरण्यगर्भादि रूपमन्त्रेण नस्यं दत्त्वा त्रैलोक्यपतिः त्रैलोक्याधारः पुरुषोत्तमो गर्भे आहितः एतावता ग
र्भिणीये त्रैलोक्यमापिवर्तते। तथास्ति भूरादिलोकत्रयमसंकीर्णः भवत्वेभिः त्रिभिः मन्त्रैः। केशानां पृथक्करणं कृत्वा ते सीमन्तोन्नयने पृथक्कृत
नैः केशैर्वेणीं वध्नात्यनेन मन्त्रेण॥ ओं अयमूर्जावतो वृक्ष ऊर्जीवफनिनीभव। अस्यार्थः हे गर्भिणी अयं वृक्षः ऊर्जावतः ऊर्जो बलं तद्वान् एत
योगात् ऊर्जीवत्त हावडडुयुर्वीव यथा। फलिनी फलयुक्तास्तथा त्वमपि फलिनी पुत्रिणी भव अत्र प्रथमपदेन उक्तवस्तुतिः द्वितीयपदेन गर्भिण्याः
पुत्रिणीत्वम्। शास्त्रे ऊर्जीवत इति सुपां सुलो भवन्तीति विभक्तिव्यत्ययेन प्रथमवचनस्थाने द्वितीयाबहुवचनम्। वीणाकाराभ्यां वाजनिगी
यमाने यजमानः अयमेनाङ्गा ‥ यति। ओं सोम एव नो राजेव मानुषीः प्रजाः। अविमुक्तचक्रा आसीरं स्तीरे तुभ्यमसौ अमुकनदि तुभ्यं तवतीरे प्र
जाः आसीरन् तिष्ठन्ति किंभूताः प्रजाः मानुषीः मानुष्यः पुनः किंभूताः अरिमुक्तचक्राः अरिमुक्तं अरित्यक्तं चक्रं मण्डलं याभिः अरिमुक्तचक्राः
इमां प्रजानां राजा इव राजा यथा रक्षकः पोष्टा च एवं नोऽस्माकं सोमश्चन्द्रो रक्षकः पोष्टा च भवत्वित्याशंसा वाक्यार्थः। राजेव मानुषीरिति सुपां सुरि
ति प्रथमबहुवचने द्वितीयावचनं तुभ्यमिति षष्ठ्यर्थे चतुर्थी असाविति संबोधनान्तस्थितनदीनामोपलक्षणम्॥ इति सीमन्तोन्नयनम्॥ अथ
सोष्यन्तीकर्म। तत्र पारस्करः। सोष्यन्तीमद्भिरभ्युक्षत्येजतु दशमास्य इति अत्र प्राप्तशूलवेदनां गर्भिणीं सुखप्रसवार्थम् जलेनाभ्युक्षेत्यनेन म
न्त्रेण। ओं एजतु दशमास्यो गर्भो जरायुणा सह यथायं वायुरेजति यथा समुद्र एजत्येवायं दशमास्यो अस्रज्जरायुणा सह अस्यार्थः। दशमास्यः दशमा
सकालावच्छिन्नः संपूर्णप्रसवकालीन इति यावत् गर्भः प्रसिद्धार्थः॥ एजतु कम्पतां न केवलं गर्भः जरायुणा सह जरायुर्गर्भवेष्टनं आवरणं इति प्रसवप्रसि

ब्रा॰स॰ ९८

त्वैरेव वड्ढ्यापयाभुतिः यांवैकं चित्यत्तत्वत्विज आशिषमाशासते यजमानस्यैव सेति। पुनः। पारस्करः स पद्दिकामयेत्सर्वमायुरियात्॥ वासो प्राणन
मभिमृशे दिवस्परीत्येतस्यानुवाकास्योत्तमम्रुचं परिशिनष्टि तत्र कुमारस्य संपूर्णायुःप्राप्तिकामनया कुमारस्य हृदयस्पर्शात् एतानेकादश मन्त्रा
न् जपति एतेषां वत्सप्रिय ऋषिरग्निर्देवता त्रिष्टुप्छन्दः चयनेऽग्न्युपस्थाने विनियोगः मन्त्रो यथा ॐ दिवस्परिप्रथमं जज्ञे अग्निरस्माद्द्वितीयं परि
जातवेदाः तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः अस्यार्थः। अग्निर्दिवस्परि आकाशमधिकृत्य जज्ञे जातवान् जातवेदा अग्निरस्मभ
स्मत्परि अस्मत्तः पुरुषरूपाद्विष्णुमधिकृत्य द्वितीयं जज्ञे अप्सु जलेषु तृतीयं जज्ञे नृमनाः नृषु मनुष्येषु मनो यस्येति नृमनाः प्रजापतिः एवं अग्निमिन्धानं दीप
16 यन् अजस्रं पुनः पुनः जरान् जरयति किंभूतः प्रजापतिः स्वाधीः सुशोभनं आहिता धीर्बुद्धिर्यस्य स स्वाधीः प्रजापतिः ॐ विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते
धाम विभृता पुरुत्रा विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ॥ अस्यार्थः। हे अग्ने ते तव त्रेधा त्रिःप्रकारं त्रयाणि अग्निर्वायुः सूर्यः रूपाणि
विद्मः जानीमः। किंच ते धाम स्थानानि आहवनीयगार्हपत्यदक्षिणाग्निरूपाणि विद्मः किंभूतानि विभृतानि विशेषेण भृतानि आधारभूतानि
अपि किंभूतानि पुरुत्रा पुरुत्रानि पुरुत्र यत्ते इति पुरुत्रन्तानि पुरुवाणि जगद्रक्षाकारकाणि इत्यर्थः इति चेत्तेनाम विद्मः किंभूतं पर मं न केवल
मुत्तमम पियद्गुहाया स्ववस्थितं गुह्यमिति॥ अपिच अतः सकाशात् आजगन्थ आगतोसि त्वं एडंसंश्रेय कजन विद्मः अत्र विद्मान इति आकारपदंत
धाम इति बहुवचने एकवचनं विभृतानि पुरुत्राणि इत्यत्र निलोपः छन्दसः गुहा इति सप्तम्यां प्रथमा आजगन्थ इति गमॢ् गतौ लिट्यस्माड्डातोः लिङ्म
ध्यमपुरुषैकवचने लङ्पदेशात् तथा इति इड्निषेधः हे अग्ने तव रूपस्थाननामानि तत्प्रकारकाणि एवं जानीम इति वाक्यार्थः। ॐ समुद्रे त्वा नृमणा अप्स्व ग्राम॰
न्तर्नृचक्षा ईधे दिवो अग्निईधन्नृतृतीये त्वा रजसि तस्थिवांसं हिधा अवर्धयन्। अस्यार्थः। हे अग्ने त्वा त्वां नृमना प्रजापतिः ईधे दीपयाञ्च ९८

मेतदाश्रितं सर्वं प्रमेयजातं त्वयि दधामि दधामीति सर्वत्रैव समानम् त्रैलोक्यगतप्रमेयजातधारणत्वमेधावत्विति वाक्यार्थः ।पुनः पारस्करः दक्षि
णकर्णे जपति आयुष्याणि त्र्यायुषमिति कुमारस्य दीर्घायुष्ट्वार्थं मेतन्मन्त्रद्वयम् ॐ अग्निरायुष्मान् स वनस्पतिभिरायुष्मान्स्तेन त्वा आयुषा आयु
ष्मन्तं करोमि सोम आयुष्मान्सो[illegible]षधीभिरायुष्मांस्तेन त्वा आयुषा आयुष्मन्तं करोमि ब्रह्म आयुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वा आयुषा आयुष्मन्तं करोमि दे
वा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वा आयुषा आयुष्मन्तं करोमि ओषधय आयुष्मन्तस्तेन्नेनैरायुष्मन्त सेन त्वा आयुषा आयुष्मन्तं करोमि पितर आ
युष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वा आयुषा आयुष्मन्तं करोमि यत्त मायुष्मान्स दक्षिणाभिरायुष्मान्स्तेन त्वा आयुषा आयुष्मन्तं करोमि यज्ञमा
युष्मान्स दक्षिणाभिरायुष्मान्स्तेन त्वा आयुषा आयुष्मन्तं करोमि समुद्र आयुष्मान्स स्रवन्तीभिरायुष्मान्तेन त्वा आयुषा आयुष्मन्तं करोमि अस्या
र्थः योऽयमग्निरायुष्मान् चिरस्थायी स वनस्पतीभिर्वृक्षैस्तद्दारुतया आग्नेराश्रयत्वमुपगतैर्वायुष्मान्तेनाग्निसंबन्धिना आयुषा त्वां आयुष्मन्तं करो
मि सोमश्चन्द्रः ओषधीभिर्ब्रह्मा दिभि अमावास्यायां क्षीणश्चन्द्रमा ओषधीषु प्रविष्टो भवति ततः शुक्लपक्षे ताभिराप्याय्यमानः क्रमेण वृद्धिमासाद्य तन्
आयुष्मान् भवति ब्रह्म वेदः ब्राह्मणैः प्रसिद्धैः ब्राह्मणैर्हि शिष्योपाध्यायक्रमेण धार्य्यमाणो वेद आयुष्मान् भवति देवा अमृतेनेति च प्रसिद्धार्थं देवा
नां हि अमृतेन प्राप्यामरत्वं ऋषयो मरीच्यादयः व्रतैश्चान्द्रायणप्रभृतिभिः ऋषीणां हि तापसैवं दीर्घायुष्ट्वं पितरः अग्निदग्धादयः स्वधाभिः पितॄणाम
न्नैः यज्ञैः स दक्षिणाभिरिति च प्रसिद्धार्थं समुद्रः प्रसिद्धः स्रवन्तीभिर्नदीभिः अपरञ्च सर्वं समानमेव वनस्पतीति अन्येषामपि दृश्यते इति दीर्घत्वम्
॥ कश्यपस्य त्र्यायुषमिति अस्यार्थः । त्रीणि अन्नूषि समाहृतानि आयुषं आयुः शब्दश्चावस्था वचनः बाल्ययौवनवार्द्धकात्मकमवस्थात्रयमित्यर्थः
कश्यप ऋषेस्त्र्यायुषं जमदग्नेस्त्र्यायुषं देवानां ब्रह्मादीनां यत् आयुषं तन्मे समस्तु भवतु । अनयश्चापि कामगोचरा आशंसा पठ्यते तथापि कुमारगो

ब्रा॰स॰ वनानामरुणधारयितामनीषाणांमनोभिलषितानांप्राप्यणः प्रापयिताधनमिच्छेक्रतुताशनादित्यभिप्रायमेतत् सोमगोपाः सोमंचन्द्रंगोपायतिरक्ष
६९ तिगुपरक्षणे इत्यस्मात् सोमोपपदात् सर्वधातुभ्योऽसुन् इत्यसुन् इत्सहुन् प्रत्ययः सहसः वनस्यसूनुः पुत्रः बलवतामध्यमानश्चेत्युत्पद्यतेअप्सु
जतेत्युरुणावरुणः सर्वमेवश्रोणासुदारः इत्यादिवसुरित्यस्यविशेषणम्॥ ॐ विश्वस्यकेतुर्भुवनस्यगर्भआरोदसीअपृणाज्जायमानः वीडुंचिदद्रि
मभि .त्परायन् जनायदग्निमयजन्तपञ्च॥ अस्यार्थः॥ यत्पञ्चअग्निपञ्चचत्वारोब्राह्मणादयः निषादाश्चसङ्कीर्णजातिश्चेतिपञ्चजनामनु
ष्याः अयजन्तपूजितवन्तः सोऽग्निर्विश्वस्यसर्वप्राणिजातस्यकेतुः ज्ञातासर्वज्ञइत्यर्थः॥ भुवनस्यभुवनवर्तिनोभूतजातस्यगर्भेअन्तर्वर्तीप्राणादि
रूपेणवर्ततआइत्युपसर्गोऽपृणादित्यनेनसंबध्यतेकिंभूतोअग्निःरोदसीआपृणात्द्यावापृथिव्योपूरितवानित्यर्थः॥ आदित्यतयाजायमान
श्चोत्पद्यमानः किंचअद्रिंपर्वतंअभिनत्विदारितवान् किंचभूतंवी डुंचित्शब्दोऽप्यर्थेविनमपीत्यर्थः॥ कुर्वन्परायन्परागच्छन्तत्रपर्व
तेअ...वत् एतेनेऽग्निरेवइन्द्रइत्युक्तम्भवति॰ केतुरितिकिनज्ञानेइत्यस्माद्धातोरोणादिकतुप्रत्ययः॥ ॐ उशिक्पावकोअरतिःसुमेधा
मर्त्येष्वग्निरमृतोनिधायिइयर्तिधूममरुषंभरिभ्रदुच्छुक्रेणशोचिषाद्यामिनक्षन्॥ अस्यार्थः॥ अग्निर्मर्त्येषुमनुष्येषुनिधायिनिहितः किंभूतः
उशिक्कांतःमनोहरःपावकःपवित्रताकारीः अरतिः अलंमतिः पर्याप्तेरित्यर्थः॥ सुमेधाः साधुप्रज्ञः अमृतः अमरणधर्मोयतएवंभूतोऽग्निः
सधूममरुडलइयर्तिउद्गमयतिउदितिव्यवहितमन्त्रसम्बन्धः किंभूतः धूममरुषंअरोचनंरूपवदित्यर्थः किंकुर्वन्अग्निः भरिभ्रत्जगद्धारयन्अ
पिचशोचिषारश्मिनाद्यांआकाशंइनक्षन्व्याप्नुवन् किंभूतेनशोचिषाशुक्रेणशुक्लवर्णेनअत्रउशिक्इतिवशकान्तावित्यस्माद्धातोरौणादिकेडप्र॰ राम॰
त्ययः अरतिअलंमतिरित्यस्याव्यत्ययोवहुलमितिवचनात् अत्रचलमकारयोर्लोपः वलयोरैकस्मरणात् भरिभ्रदितिडुभृञ्धारणेइत्यस्य ६९

17

कार किंभूतन्त्वां समुद्रे अप्सु जलेषु अन्तर्मध्ये वाडवाग्नित्वेनावस्थितं नृमनः किंभूतः नृचक्षाः नृषु मनुष्येषु चक्षुर्यस्येति नृचक्षाः किंभूतन्त्वा दिवः स्व
र्गस्य जघेन ऊधसि आपीनस्थाने पेय्यापेस्थाने आदित्ये या स्थितं आदित्यो हि पृथिवीगतं रसं रश्मिभिरादाय पुनर्वर्षासु उत्सृजति एतावता अन्तःस्व
र्गप्रदेशे आदित्यः स्थितः इति तत्स्थानं स्वर्गस्य ऊधः ऊधः शब्देनाभिहितं एवं तृतीये रजसि भूमिराकाशं स्वर्ग इति गणनाक्रमेण तृतीयः स्वर्गो भ
वति तृतीये लोके अपां एडयस्थ जलानां उपस्थे उत्सङ्गे च तस्थिवांसं स्थितं त्वां महिषाः प्राणवायवः अवर्धयन् वर्धयांचक्रुः अत्र ऊधन् इति ऊधःश
ब्दात्सप्तम्येकवचनं तस्य सुपां सुलुगिति लुग्व्यत्ययो वहुलमिति कारस्य नकारः महिषाः प्राणा वै महिषा इति श्रुतिप्रमाणं समुद्रे नाडवाग्नितया स्वर्गे
आदित्यतया स्थितं त्वामग्निं वायवो वर्धयन्तीति अग्निस्तुतिर्वाक्यार्थः ॥ ॐ अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् सद्यो ज
ज्ञानो वि हि इद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ अस्यार्थः ॥ अग्निः अक्रन्दत् शब्दं करोति किंच सा मा क्षमां पृथिवीं वेविहत् लेढि आस्वादयती
त्यर्थः ॥ रलयोरैकत्वस्मरणम् लकारस्य स्थाने रेफः पठ्यते । किं कुर्वन् वीरुधः ओषधीः समञ्जन् आप्नुवन् अपि च ईहुः स्तनुस्तिः सन् व्यख्य
त् विख्यापयति किंभूतः सद्योजज्ञानः तात्कालिकजातः जायमानः हि शब्दः हशब्दो पादपूर्णार्थः । किंच रोदसी द्यावापृथिव्यौ अन्तर्मध्ये द्या
वापृथिव्यो मध्ये इत्यर्थः ॥ भानुना रश्मिना आभाति क इव द्यौरिव अत्र मेङ्व्याः क्रोशन्ती निवजे द्योशब्देन मेघ उच्यते एवमुक्तं भवति यथा मे
घः स्तनयन् शब्दं कुर्वन् पृथिवीं वृन्देकेन लिहति ओषधीर्व्याप्नोति भानुना विद्युद्रूपेण प्रकाशयति । ॐ श्रीणामुदारो धरुणो रयीणां मनीषाणां
प्रार्पणः सोमगोपाः वसुः सूनुः सहसो अप्सु राजा विभात्यग्र उषसामिधानः ॥ अस्यार्थः । वसुरग्निर्विभाति प्रकाशते उषसां उषसि प्रत्यूषसमये
अग्ने प्रथमं इधानः दीप्यमानः प्रत्यूषसमये हि अग्नीनां प्रादुष्करणं क्रियते पुनः किंभूतः अग्निः श्रीणां लक्ष्मीणां उदारः आधाता रयीणां ।

ज्ञा·स ७२ कुमारत्यजेतिवाक्यार्थः॥ कुङ् अपनयने इत्यस्य धातोरपपूर्वस्य लोटि रूपम्॥ ॐ ननामयति न रुदति न हृष्यति यत्र वयं वदामो यत्र चाभिमृषामसि॥ य
त्र कुमारे वयं वदामः किं वदामः वक्ष्यामीत्याकाङ्क्षायां सत्वा स्वबोद्धव्यम्॥ यत्र चाभिमृषामसि अभितः सर्वतोभावेन यस्य दर्शनं कुर्मः कुमारः न नामयति
अङ्गानामलङ्कारो नित्यं कुरादिर्न भवतीत्यर्थः॥ न रुदति रोदनपीडायुक्तो न भवति न हृष्यति कर्षपीडायुक्तो न भवति॥ इति बालग्रहोपद्रवशान्तिः
नामकर्मणि वैदिकमन्त्रैरनुष्ठानं पारस्करेण नापदर्शितं अतोऽस्माभिरपि न दीयव्याख्यानं कृतमिति समाप्तं जातकर्म॥ अथ निष्क्रमणं॥ तत्र निष्क्र
18 मणे विशेषफलस्याश्रवणाद्याज्ञवल्क्योक्तबीजगर्भसमुत्पन्नपापक्षय एव केवलं बोद्धव्यम्॥ अथ गर्भाधानादिसंस्कारानभिधाय याज्ञवल्क्यः एव
मेनः क्षयं याति बीजगर्भसमुद्भवम्। तत्र कुमारं सूर्यं दर्शयत्यनेन। ॐ तच्चक्षुर्देवहितमिति। अस्यार्थः। हतो हरगङ्गुङ्मादित्यादिकन्दिकायाः प्रहरा
त्वात् आदित्येनादित्यबिम्बं परामृश्यते। तत् आदित्यबिम्बं चक्षुः त्रैलोक्यस्य चक्षुर्भूतं यथा चक्षुषा विना चाक्षुषं किंचित्र प्रकाशते तथा अनेनापि विना न प्रका
शते यतः किंभूतं देवहितं अनुदिने अस्मिन् दैवं कर्म तत्क्रियते। यतः किंभूतं पुरस्तादुच्चरत् प्राच्यां दिशि ऊर्ध्वं गच्छत् अपि किंभूतं शुक्रं निष्पापं
एवमादित्यं स्तुत्वा वयं पश्येम शरदः शतं जीवेम शरदः ---- शतं शृणुयाम शरदः शतं इति व्यक्तार्थमेव। आदित्यं स्तुत्वा वयमविकलेन्द्रियाः शतं वर्षा
णि जीवेम ह्यत्राशंसावाक्यार्थः। ततः सूर्यार्घ्यं दद्यादनेन ॐ आकृष्णेनेति। अस्या व्याख्यादिकमादित्यपूजायामेवालिखितं अतस्तत्रैवानुसन्धेयमि
ति॥ समाप्तं निष्क्रमणम्॥ अस्यापि मनुयाज्ञवल्क्योक्तबीजगर्भोद्भवपापक्षय एव फलम्॥ अथ रेतोरक्तगर्भोपघातपञ्चगुणः जातकर्मणा प्रथममपोहति तृ
त्यनुङ्गनोहारीतः प्राशनेन तृतीयं तथा गर्भाधानाद्यष्टसंस्काराणां प्रत्येकं फलमभिधाय हारीत एव पुनराह। एतैरष्टभिर्गर्भसंस्कारैर्गर्भो पश्चात्पूतो भ राम
वति। तत्रान्नप्राशने पारस्करः स्थालीपाकं श्रपयित्वा आज्यभागौ हुत्वा आज्याहुतीर्जुहोति॥ देवीं वाचमित्यादि राजानो अभ्यैति चहितीयामिम ७२

१२५/१५

व्रा॰ स॰ १३ त्रायुनागस्थानशीय॥ चक्षुषा चक्षुरिन्द्रियेण रूपाणि शुक्लादीनि अशीय श्रोत्रेण कर्णेन्द्रियेण यशः कीर्तिं अशीय॥ तस्य रूपयशसामशनमुपभोगे अत्र
भक्षामीति यावत्। अनेनाहुतिचतुष्टयेन चक्षुरादीन्द्रियोपभोग्यान् विषयान् अनुभवामीत्याशंसा वाक्यार्थः। अत्र चाशीयइत्युत्तमपुरुषप्रयोगात् कर्तृ
गोचरा आशंसा यद्यपि दृश्यते तथापि कुमारगोचरैव बोद्धव्या। यथा श्रुतिः जीवेकाचन यत्रस्थ द्विज आशिषमाशास्ते यजमानस्यैव सेति॥ इत्यन्नप्रा
शनम्॥ अथ चूडाकरणम्॥ अस्यापि मनुयाज्ञवल्क्योक्तबीजगर्भोद्भवपापक्षय एव फलम्॥ तथा रेतोरक्तगर्भोपघातः पञ्चगुणा जातकर्मणा प्रथम
मपोहतीत्यनुवृत्तौ हारीतः चूडाकरणे चतुर्थः। तथा गर्भाधानाद्यष्टसंस्काराणां प्रत्येकं फलमभिधाय हारीत एव पुनराह। एतैरष्टभिर्गर्भोपघातान्
१७ पूतो भवति॥ अत्र चूडाकरणे परिसमूहनादिब्रह्मदक्षिणादानान्तहोमकर्म समाप्य शीतलजले उष्णजले प्रक्षिपेत्। यथा पारस्करः॥ शीतास्पु उष्णा
मासिञ्चति उष्णेन वाय इत्यादि॥ ॐ उष्णेन वाय उदकेनेह्यदिते केश—न्वप॥ अस्यार्थः हे वायो वायुसंबोधनमात्रेकार्यकारणत्वोपचारेण जलसंनिधि
नम्॥ किंभूतं अदितीखण्डशीतलत्वं उष्णेन उदकेन एहि सङ्गतो भव सङ्गम्य च केशान्वप छिन्धि। गंधनाशे उष्णजलशीतलजलयोः सङ्गतिरिति वा
क्यार्थः॥ अदिते इति दोऽवखण्डने इति धातोः क्तिन्प्रत्ययेन दितीरूपम्। न विद्यते दितिर्यस्येति अदितिः तेनोष्णजलमिश्रितेन जलेन दक्षिणं शिरः पा
र्श्वमनेन मन्त्रेणार्द्रयति। यथा पारस्करः अथास्य दक्षिणगोदानमुनत्ति सवित्रेत्यादि। मन्त्रो यथा। ॐ सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनुं दीर्घायुत्वा
य वलाय वर्चसे इति॥ अस्यार्थः॥ आपस्तेतव कुमारस्य तनुं देहावयवं उन्दन्तु किंभूताः सवित्रा आदित्येन प्रसूता जनिताः पुनः किंभूताः दैव्याः दिवि आका राम
शे भवन्त्याः किमर्थं उन्दन्तु दीर्घायुष्ट्व यवलाय वर्चसे तेजसे॥ ततः केशेषु कुशान्मन्त्रेण योजयति। यथा पारस्करः। कुशं तरुण्यन्तर्दधात्योषधय इति १३
ॐ ओषधे त्रायस्व॥ हे ओषधे त्रायस्वैनं रक्षस्व अत्र एनमिति मन्त्रस्य द्वितीयपदे स्वयं तत्तदेव कर्म तया बोद्धव्यम्। साकांक्षत्वायोग्यत्वाच्च॥ ॐ स्व,

नम्। मन्त्रो यथा। ॐ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु स्वाहा॥ अस्यार्थः दे
वाः इन्द्रादयः वाचं वाणीं अजनयन्त इत्यादि नवन्तः किं भूतां देवीं कां निर्गुणयुक्तां तां वाचं पशवो वदन्ति के ते पशवः विश्वरूपाः विश्वं मानुषादि रूपं ये
षां सा वाक् धेनुर्भूत्वा अस्मानुपैतु उपगच्छतु उप इत्यव्ययं हितं रक्षितं मनेन संबध्यते। सा कथं धेनुर्भवतीत्याकांक्षायां हेतुगर्भविशेषणमाह नो अस्माकं ऊर्जं
सामर्थ्यं दुहाना पूरयन्ती यतः किं भूतं मन्द्रेषु मन्द्रः गंभीरः अव्यक्त इति यावत् तस्य इषु गमकं तापकमित्यर्थः। अव्यक्तः। परोक्षोऽप्यर्थो येनावगम्यते तं
त्सामर्थ्यं अस्माकं पूरयन्ती या वाणीत्यर्थः। किं पुनः किं भूता सुष्टुता सुष्टु स्तुता या वाक् प्रथमतो देवैर्जनिता ततो मानुषादिभिः सर्वैरेवोच्यते इति वाचं
स्तुत्वा अस्माकं सामर्थ्यं जनयन्ती अस्मानुपगच्छत्विति आशंसा वाक्यार्थः। द्वितीयाहुति मन्त्रो यथा। ॐ राजानो द्यामसुरानि दानराजो देवानृतुभिः
कल्पयन्ति। राज्ञो हि मा सर्ववीरं जजान विश्वात्मा सा राजपत्तिजयेयम् स्वाहा। अस्यार्थः राजोऽनुनोऽस्माकं अद्यानुप्राशनसमये दानं होमरूपं मसुराति
अभ्यनुजानातु प्रपूर्वः सुरतिरभ्यनुज्ञानेन वर्त्तते इति किंच राजः देवान् इन्द्रादीन् ऋतुभिः समयविशेषैः कल्पयति योजयतु अस्मिन् कर्मणि ते नान्नेन देवा
श्चिरकालं वर्तन्त इत्यर्थः। राजा हि यतः कारणात् मा मां सर्ववीरं सर्वेन्द्रकार्येर्वीरं कर्मजनानू चकार कृतवान् अतः कारणात् राजपतिः अन्नस्य ईश्वरो
ऽहं सर्वा आशाः प्रत्याशा जयेयं अःवान्नमस्माक मन्नप्राशन होमम भ्यनुजानातु अस्मिन् कर्मणि ते नान्नेन देवाश्चिरकालं वर्तन्ताम्। अन्नेन सर्वैरस
मः कृतोऽहं अन्नेश्वरो भूत्वा सर्वाः प्रत्याशा जयेयमित्याशंसा वाक्यार्थः। प्रसुरातीति कल्पयातीति लेट्प्रत्ययेन रूपे:। ततः स्थालीपाकेनाहुतिचतुष्टयं।
जुहोति। यथा पारस्करः। स्थालीपाकेन जुहोति प्राणेनान्न मशीय स्वाहेत्यादिः तत्र मन्त्रो यथा। ॐ प्राणेनान्नमशीय स्वाहा ॐ अपानेन गन्धानशीय
स्वाहा। ॐ चक्षुषा रूपाण्यशीय स्वाहा॥ ॐ श्रोत्रेण यशोऽशीय स्वाहा॥ अस्यार्थः। प्राणेन प्राणवायुना अन्नं अदनीयं अशीय अश्नीय भुञ्जे॥ अपानेनापान

स्कर.२

ज्ञा.स. तभूयात् किंभूतमायुष्यंजरदृष्टिः जरतवार्धकंअश्नुतेव्याप्नोतिजरदृष्टि दीर्घकपर्य्यन्तमस्यायुर्यथास्यादित्यर्थः॥यच्चूडाकर्म्मआदिग्गेनवेदं वि
७४ हासोमवरुणयोः कृतं तत्तवक्त्रह्माकरोतीतिचूडाकर्म्मस्तुत्वात् तवआयुष्यंभूयादितिवाक्यार्थः।ब्रह्मण इतिप्रथमैकवचनस्थानषष्ठ्येकवचनम्।जर
दृष्टिरित्यजन्तलिङ्गमेव।ततःपार्श्वकेशान्छिन्द्यात्॥यथापार०।अथपश्चात्त्र्यायुषमिति।तन्मन्त्रोयथा॥ॐ कश्यपस्यत्र्यायुषंजमदग्नेस्त्र्या
युषंयद्देवानांत्र्यायुषंतन्मेस्तुत्र्यायुषम्।अस्यार्थः।त्र्यायुषंबाल्ययौवनवार्धक्यात्मकमेवस्यात्रयमित्यर्थः।कश्यपस्यऋषेस्त्र्यायुषंजमदग्नेस्त्र्यायुषंदेवा
नांब्रह्मादीनांयत्त्र्यायुषंतत्त्र्यायुषंमेस्तु।ततोवामपार्श्वकेशान्नेपारस्करः अथोत्तरतोयेनभूरिश्चरेतिं।तन्मन्त्रोयथा।ॐयेनभूरिश्चरादिवंज्योक्च
पश्चाद्धिसूर्य्यं।तेनतेवपामिब्रह्मणाजीवातवेजीवनायसुश्लोक्यायस्वस्तयः।अस्यार्थः॥येनक्षुरेणसाधनभूतेनभूरिश्चन्द्रमाः किंभूतः चरणः भ्र
२० मणशीलः दिवंज्योक्स्वर्गंस्वङ्गतःसमभवत्पश्चाद्धिसूर्य्यंसूर्य्योज्योक्चचएवचन्द्रमाःसूर्य्यसङ्गतोऽभूत् तेनक्षुरेणतेतववपामिलाङ्गस्यौ
रयामिकस्मैफलायेत्याकांक्षायामाह।ब्रह्मणाब्रह्मणेवेदलाभार्थमितियावत् नकेवलंवेदलाभार्थंजीवातवेजीवनौषधलाभार्थंच्चजीवनायप्रा
णाय।जीवनायचिरंकालप्राप्त्यर्थंच्चेत्यर्थः।जीवनार्थंचसुश्लोक्यायशोभनश्लोक्यप्रशस्तकीर्तिलाभार्थंच्चस्वस्तयेकल्याणार्थंच्चचरापरित्तिस्वरगत्यर्थे
इत्यस्मात्।अस्तु नृश्वस यइतिसर्वे विषयश्छन्दसिविकल्प्यतइतिविभक्तेरलुक्।ततोदक्षिणवर्त्तेनलोहक्षुरंशिरसिवारत्रयंभ्रामयेत् यथापारस्करः।त्रिःक्षु
रेणशिरःप्रदक्षिणंपरिहरतिसुखंकेशान्तेनवक्षुरेणमयतेति।मन्त्रोयथा।ॐयत्क्षुरेणमर्चयतासुपेशसावप्तावावपतिकेशांश्छिन्धिशिरोमास्यायुःप्रमो
षीः॥अस्यार्थः।अस्यकुमारस्ययत्क्षुरेणवप्तावावपति सएतस्यकुमारस्यचकेशान्समाप्यपुनर्वारत्रयंक्षुरंभ्रामयतितत्तेनपुनःक्षुरेणास्यकेशान्छिन्धिच्छेदयमाशिरःअस्यशिरश्छेदनंमाकुरुअस्यआयुषःमाप्रमोषीःआयुःखण्डनमस्यमाकुरु किंभूतेनक्षुरेणमञ्जयतामाशोधयताशि राम ७४

धिते मैनं हिंसीः। हे स्वधिते वहु एनं कुमारं मा हिंसीः॥ अस्य कुमारस्य हिंसां मा कुरु इत्यर्थः॥ मिलितस्य मन्त्रस्य पदे कुर्यैः कृतनरस्यैनं कुमारं वक्षो मा हिन
स्त्विति वाक्यार्थः। ततस्ताम्रक्षुरग्रहणे पारस्करः॥ शिवो नामेति ताम्रक्षुरमादाय इति। तत्र मन्त्रो यथा॥ ॐ शिवो नामासि स्वधितिस्ते पिता नमस्तेऽस्तु मा मा
हिंसीः॥ कर्म्मार्थं सुकल्पितं क्षुर मन्त्रसम्बोध्यत्वेन वेऽनुव्यम्। हे क्षुर शिवो नामासि। शिवं कल्याणमस्मिन्नभिधानमसि। शिव इति तव नामेत्यर्थः॥ किन्त्वते
तव स्वधितिवपितावद्धातुरोत्पत्तिरित्यर्थः। एवंभूताय तुभ्यं नमोऽस्तु मा मा हिंसिः नव्यथ्यस्वेकल्याणनामाव ह्वउत् पक्षुरनिक्षुरं सुत्वानमसेलित्व
त्ति नमस्कृत्य मामां मा थ्यथयेति याचनावाक्यार्थः। अत्र यद्यपि मा मां हिंसीरिति कर्तृविषयणी याच्ञा श्रूयते तथापि कुमारविषयिणी॥ यंचकात्वनयत्रुथे
हिज आशिषमाग्रान्ते। यजमानस्यैव सेति ततस्तां ताम्रक्षुरस्य केशेषु संलग्ने। पारस्करः निवर्तयामीति। निपूर्वो वर्ततिः संलग्नने वर्त्तते इति कर्कभाष्ये।
रवितत्वात् एतच्च क्रियापदं कर्तृसाकांक्षं कर्म्मसाकांक्षं च अतस्तत्राह मिति कर्ता क्षुरमिति कर्म्म च वोढव्यम्। किमर्थं सुसंलागनमित्याकांक्षायामाह आ
युषजीवनाय अन्नाद्याय अन्नात्त्वं तत् आद्यं भक्ष्यं त्वेति अन्नाद्यं तदर्थम्। तथा प्रजननाय प्रजननं प्रसवशक्तिः तदर्थं तथा रायस्पोषाय वा योधनस
पौषाय पुष्ट्यर्थं तथा सुप्रजास्त्वाय शोभनसन्ततिमत्त्वार्थं तथा सुवीर्याय उत्कृष्टवीर्य्यवत्त्वार्थं च अनेन क्षुरसंलग्नकर्म्मणा अस्य कुमारस्य नारीनिभ
वन्त्वित्याशंसावाक्यार्थः॥ सुप्रजास्त्वायेति वर्णागमो वर्णविपर्य्ययश्चेति न्यायेन सकारस्थाने सः। ततस्तूष्णीं लोहक्षुरमादाय सकुशान् कोणान् छिन्द्यात्
। यथा पारस्करः। प्रवपति येनावपत् सवितेति। मन्त्रो यथा॥ ॐ येनावपत्सविता क्षुरेण सोमस्य राज्ञो च वरुणस्य विद्वान् तेन ते ब्रह्मणो वपति इदमस्या
युष्मान् जरदष्टिर्यथासत्॥ अस्यार्थः। हे कुमार सविता आदित्यः येन क्षुरेण सोमस्य अवपत मुण्डितवान् अर्थात् केशानिति॥ किंभूतस्य सोमस्य राज्ञः
सोमस्य वरुणस्य च किंभूतः आदित्यः विद्वान् तेन क्षुरेण ब्रह्मणाः ... वपति मुण्डयति यथा इदं चूडाकर्म्म अस्य तव आयुष्मं असि
मंत्रो यथा· निवर्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय। अस्यार्थः निवर्तयामि संलग्नयामि त्रु·पं·८॥

यज्ञोपवीतं प्रतिमुञ्च धारय प्रतिपूर्वेमुञ्चतिर्धारणे वर्तते किंभूतं यज्ञोपवीतं आयुष्यमायुर्वृद्धिहेतुं अग्र्यं श्रेष्ठं शुभ्रं निर्मलं परमं पवित्रं पुनः किंभूत
पुरस्तात्पूर्वं बृहस्पतिः सहजं पूर्वं बृहस्पतिना सहैकस्मिन्समये जातमित्यर्थः किमर्थमस्य धारणमित्याकाङ्क्षायामाह। बलं सामर्थ्यमस्तु तेजोऽस्तु
हे माणवक आयुर्बलतेजसां लाभाय यज्ञोपवीतं धारयेति वाक्यार्थः। यज्ञोपवीतदानानन्तरं स्मृतिशास्त्रविहितं तयो अमन्त्रकमेव वस्त्राजिन।
न्दद्यात् ततो माणवकः। पालाशाद्यन्यतमदण्डं गृह्णीयात् तथा च पारस्करः। दण्डं प्रयच्छति तं प्रतिगृह्णाति यो मे दण्डः परापतेति तत्र मन्त्रो यथा
यो मे दण्ड इत्यादि ॐ यो मे दण्डः परापतद्वैहायसोऽधि भूम्यां तमहं पुनराददाम्यायुषे ब्रह्मणे ब्रह्मवर्चसायेति अस्यार्थः यो मे मम दण्डः अधि भूम्यां भूमेरु
परि परापतत् पतितः पुनः किंभूतः वैहायसः विहाय आकाशं तत्र भूतः अतो दण्डं पुनराददे प्रतिगृह्णामि प्राकृतजन्मन्यप्यहं द्विज आसं एतावता।
२१ तस्मिन्नपि जन्मनि दण्डं गृह्णामीत्यभिप्रायः किमर्थं गृह्णामीत्याकाङ्क्षायामाह। आयुषे जीवनार्थं ब्रह्मणे वेदार्थं ब्रह्मवर्चसा — — ब्रह्मतेजःप्राप्त्यर्थं चेत्यर्थः
।तत्राचार्यः स्वयं जलाञ्जलिमादाय माणवकस्याञ्जलिं पूरयेत्। तथा च पारस्करः। अथास्यांजलिं जलेनापूरयेत् आपो हि ष्ठेति तिसृभिरिति मन्त्रो यथा आ
पो हि ष्ठेत्यादि त्र्यचं तस्यार्थः अस्य मन्त्रस्य व्याख्यादिकं प्रातःस्नाने एव कृतमतस्तत्रैवानुसन्धेयं ततो माणवकस्तं जलाञ्जलिं दत्त्वा आदित्यमुपतिष्ठति त
था च पारस्करः। अथैनं सूर्यमुदीक्षयति तच्चक्षुरिति॥ मन्त्रो यथा। तच्चक्षुः देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतं शृणुया
म शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् अस्यार्थः नेरसहमा इत्यादिषु कण्डिकं प्रस्तुतत्वात् तदित्यनेनादित्यबि
म्बं परामृश्यते तदादित्यबिम्बं चक्षुः त्रैलोक्यचक्षुर्भूतं यथा चक्षुषा विना चाक्षुषं किंचिन्न प्रकाशते तथा अनेनापि विना न प्रकाशते यतः किंभूतं देवानां हि राम॰
तं अस्मिन्नुदिते दैवं कर्म क्रियते यतः पुनः किंभूतं पुरस्तात् प्राच्यां दिशि उच्चरत् ऊर्ध्वं गच्छत् अपि च किंभूतं शुक्रं शुद्धं निष्पापं एवमादित्यं स्तुत्वा चयंप ७५

शिरो निःकलुषं कुर्वेनेति यावत् पुनः किंभूतेन सुपेशसा शोभनावयवेन वपति इति मध्यमपुरुषैकवचनस्थाने तिङां तिङो भवन्तीति प्रथमकपुरुषैक-
वचनं प्रमोषीरिति मुषस्तेये लुङ्मध्यमपुरुषैकवचनम्॥ मज्जयतेति इदुमसेजो मुण्डो शत्रन्ता तृतीयैकवचनं यत्वादेति वा शब्दोऽत्र समुच्चयार्थः॥ इति
चूडाकरणमन्त्रव्याख्या॥ अथोपनयनं॥ तत्राचार्योग्निस्थापनादिकं कृत्वा माणवकं स्नातं अन्यतमं वस्त्रं परिधापयेत् तथा च पारस्करः॥ अथैनं वासः प
रिधापयति येनेन्द्रायेति॥ तत्र मन्त्रो यथा॥ ॐ येनेन्द्राय बृहस्पतिर्वासः पर्य्यदधादमृतन्तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे॥ अ
स्यार्थः॥ बृहस्पतिर्देवानामाचार्य्यः येन विधिना अवधानेन इन्द्राय इन्द्रं वासः वस्त्रं पर्य्यदधात् परिधापितवान् किंभूतं वासः अमृतं आहतेनावधाने
न त्वां परिदधामि परिधापयामि वास इति पूर्वोक्तमेव योज्यं किमर्थम् आयुषे जीवनाय दीर्घायुत्वाय चिरजीवित्वाय बलाय सामर्थ्याय वर्चसे तेजसे
च वाक्यार्थः स्फुट एव। इन्द्रायेति द्वितीयार्थे चतुर्थी पर्य्यदधात् परिदधामीति इत्यं णिजन्ते तत्र तु मौंज्याद्यन्यतमां मेखलां बध्नीयात्॥ तथा च पारस्करः॥
मेखलां बध्नीत इयं दुरुक्तं परिबाधमानेति॥ तत्र मन्त्रो यथा॥ इयं दुरुक्तमित्यादि मेखलेयमित्यन्तः॥ ॐ इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म
आगात् प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयं॥ अस्यार्थः॥ इयं मेखला आगात् आगतवती किं कुर्वाणा मे मम दुरुक्तमनुपनीत
इति दुर्वचनदोषं परिबाधमाना सर्वतोभावेन खण्डयन्ती अत एव देवी स्तुत्यादिविषया किं च पवित्रमुत्कृष्टं वर्णं द्विजातीं पुनती पावयन्ती ईदृ
शीयं मेखला स्वसा अस्तु भगिनीवन्नित्यमभ्युदयिनी भवतु अस्त्विति अध्याहार्य्यं किंभूता प्राणापानाभ्यां बलं सामर्थ्यमादधाना प्राणापानयोर्बलमे
व्यपनीत् पुनः किंभूता सुभगा अकर्कशा सुखस्पर्शेति यावत् ततो यज्ञोपवीतं त्रिकाभेका परिभाषयेत् तत्र पारस्करीस्तिस्र द्वा चार एव प्रमाणं तत्र
मन्त्रो यथा ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥ अस्यार्थः हे माणवक

श्रा.स.
७६

तदुपनयमनाम्रहेमाणवकसर्वोपच्छान्यर्थे प्रजापतिप्रभृतिभ्यस्त्वा मम पर्येयामीतिवाक्यार्थः रिष हिंसायामित्यस्माद्धातोः क्तिन् प्रत्यये कृते रिष्टिः न रिष्टि
रिष्टिः ततः शिष्यमनुशास्य तस्मै सावित्रीं दद्यात् तत्र पारस्करः अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय स
मीक्षिताय दक्षिणतस्तिष्ठत आसीनाय चैके पच्छो ऽर्द्धर्चशः सर्वां च तृतीयेइति अस्याः सुगायत्र्या व्याख्यादिकं तथा पादो ऽर्द्धर्चश इत्यादिविवरणं चोपरिगा
यत्रीव्याख्याकरप्रकरणे एव लिखितत्वादत्र न लिखितमिति तत्रैवानुसंधेयं ततस्तु माणवकसमिधाधानार्थमग्निं प्रज्वालयेत् तथा च पारस्करः अत्र स
मिधाद्यानं पाणिनाग्निं परिसमूहति अग्ने सुश्रव इति मन्त्रो यथा अग्ने सुश्रवइत्यादि ॐ अग्ने सुश्रव सुश्रवसं मा कुरु यथा त्वमग्ने सुश्रवः सुश्रवा असि
एवं मां सुश्रवः सौश्रवसं कुरु यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि एवमहं मनुष्याणां वेदस्य निधिपो भूयासम्॥ अस्यार्थः हे अग्ने किंभूतः सुश्रवः
शोभनः श्रवो नाम यस्य स सुश्रवः मां सुश्रवसं कुरु सुष्टु श्रवः कर्णेन्द्रियं यस्य स सुश्रवाः सुश्रवसं वेदाध्ययने माम् अविकलकर्णेन्द्रियं कुर्वित्यर्थः हे अ
22 ग्ने त्वं यथा सुश्रवः सुश्रवः सुश्रवा असि सुश्रवस्तरादेः सुश्रवाः शोभनकर्णो भवसि एवं यथा हे अग्ने मां सुश्रवः सौश्रवसं कुरु सुश्रवे यशसि एवं शो
भनश्रवणाजनितज्ञानशालिनं कुरु हे अग्ने त्वं यथा देवानां यज्ञस्य निधिपो देवानपीन्द्रादीनां यज्ञस्य यज्ञसंबन्धेन निधिपो निधिरसको भाण्डागारिको भव
सि एवमहं मनुष्याणां वेदस्य निधिपो भाण्डागारिको भवामीत्यर्थः ततो माणवकोऽग्नौ समिधं दद्यात्। तथा च पारस्करः प्रदक्षिणमग्निं परीत्योत्थाय स
मिधमादधात्यग्नेः समिधमाहार्षमिति। मन्त्रो यथा॥ अग्नये समिधमित्यादि अग्नये समिधमाहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधा समिध्यस
एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्म। राम
वर्चस्यन्नादो भूयासमग्नये स्वाहा॥ अस्यार्थः॥ हे अग्ने समिधमाहार्षमाहृतवानस्मि कस्मै जातवेदसे अग्नये तुभ्यमेवेत्यर्थः किंभूताय बृहते जा। ७६

श्येम शरदः शतमित्यादित्यकार्यमेव आदित्यं स्तुत्वा त्वत्प्रसादेन वयमविकलेन्द्रियाः शतं वर्षाणि जीवामेत्याशंसा वाक्यार्थः। ततश्चाचार्यो माणवकस्य द-
क्षिणस्कन्धे हस्तं दत्वा हृदयमालभेत्। तथा च पारस्करः। अथास्य दक्षिणांसमधि हृदयं आलभेत् मम व्रते ते हृदयं दधामीति। तत्र मन्त्रो यथा। ॐ मम
व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यम्। अस्यार्थः। हे माणवक तेन तव हृदयं मम व्रते द-
धामि तव हृदयं मदेकव्रतं स्थापयामि किं तन्मदेकव्रतं त्वमित्याकांक्षायामाह। तव चित्तं मम चित्तमनुकूलमस्तु मदीयचित्तानुकूलं तव चित्तं भवत्वि-
त्यर्थः। त्वमेकमना एकचित्तः सन्मम वाचं जुषस्व सेवस्व बृहस्पतिर्देवानामाचार्यस्त्वां मह्यं नियुनक्तु नियोजयतु अस्मिन्मदेकव्रतत्वे बृहस्पतिस्त्वां-
व नियोजको भवत्वित्यर्थः॥ तत आचार्यो माणवकस्य ब्रह्मचार्यसीत्युक्तो माणवके न भवतीत्युत्तरे दीयमाने मन्त्रं पठेत्। तथा च पारस्करः भवतीत्युच्यमा-
ने इन्द्रस्य ब्रह्मचार्यसीति। तत्र मन्त्रो यथा। इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यः। अस्यार्थः हे माणवक इन्द्रस्य त्रैलोक्यनाथस्य ब्रह्मचार्य-
सि भवसि तवाग्निराचार्यः सर्वेषामेव द्विजातीनां साम्येनाग्नेर्गुरुत्वात्। यथा गुरुरग्निर्द्विजातीनामिति स्मृतिः इदानीं तु एतदुपनयकर्मकर्तृत्वेना-
हं तवाचार्यः। तत आचार्यो माणवकं भूतेभ्यो दद्यात्। तथा च पारस्करः। अथैनं भूतेभ्यः परिददाति प्रजापतये इत्यादिमन्त्रो यथा। अरिष्टा-
वित्यादिना ॐ प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि द्यावापृथिवीभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवे-
भ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै। अस्यार्थः। हे माणवक त्वां प्रजापतये परिददामि समर्पयामि किं च सवित्रे सूर्याय परिद-
दामि किंभूताय देवाय दानादिगुणयुक्ताय तथाद्भ्यः जलेभ्यः ओषधीभ्यः व्रीह्यादिभ्यः तथा द्यावापृथिवीभ्यामाकाशभूम्यां तथा विश्वेभ्यो देवेभ्यः सर्वे-
भ्यः इन्द्रप्रभृतिभ्यो देवेभ्यः तथा सर्वेभ्यो भूतेभ्यो राक्षसादिभ्यः परिददामीति सर्वत्र तुल्यार्थं किमर्थं समर्पणमित्याकांक्षायामाह अरिष्ट्यै परिक्षिरापत

ब्रा·स· येममाङ्गानि शरीरावयवाः आप्यायन्तां स्फीता भवन्तु न केवलं मेधा मम भवतु एतदपि भवत्विति वाक्यार्थः। ॐ वाक् च म आप्यायतां २ ॐ प्राण
७७ श्च म आप्यायतां ३ ॐ चक्षुश्च म आप्यायतां ४ ॐ श्रोत्रश्च म आप्यायतां ॐ यशश्च म आप्यायतां ५ ॐ बलञ्च म आप्यायतां ६ एषामर्थः वाग्वचनका
रणमिन्द्रियं मुखमित्यर्थः। प्राणः प्राणवायुः श्वासस्ताम्मा चक्षुः श्रोत्रे प्रसिद्धे यशो बलमिति च द्वयमपि प्रसिद्धमेव च मे आप्यायतामिति सर्वत्र तुल्यार्थः॥
करोतीति व्यक्तं एवं ततो माणवको भस्मनाऽऽयुष्यं कुर्यात् तथा च पारस्करः आयुष्यं कुरुते भस्मना ललाटे ग्रीवायां दक्षिणांसे हृदि त्र्यायुषमि
ति प्रतिमन्त्रमिति तत्र मन्त्रो यथा ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषं अस्यार्थः। त्रीण्यायूंषि समाहृतानि त्र्यायु
षं आयुः शब्दो अत्रावस्थावचनः आयुषं बाल्ययौवनवार्द्धक्यात्मकावस्थात्रयमित्यर्थः। यथा कश्यपस्य ऋषेः येन आयुषं जमदग्नेः यत् आयुषं देवा
९३ नां ब्रह्मादीनां यत् आयुषं तत् आयुषं मम मास्तु। इत्यावसथ्यिकमहाधर्माधिकृतहलायुधकृतौ ब्राह्मणसर्वस्वे उपनयनमन्त्रव्याख्या। अथ समावर्त
नं तत्र ब्रह्मचर्यानन्तरं समावर्तनकालविधौ मनुः। षट्त्रिंशदाब्दिकं ब्रह्मचर्यं गुरौ त्रैवेदिकं व्रतं तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा अत्र ग्रहणान्ति
कमेव वेति योऽत्र तीक्ष्णबुद्धिः स अल्पसमये नैव वेदत्रयमभ्यस्यति तेन तदभ्यासानन्तरमेव समावर्तनं कर्त्तव्यमित्यर्थः। एतस्यैव स्फुटीकरणे पारस्करः अष्टा
चत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं द्वादश द्वादश वा प्रतिवेदं यावद्ग्रहणं वेति तत्र सर्वथा समग्रवेदाध्ययनासमर्थेन त्वाह्निकस्य रूपगर्भाधानादिद।
शसंस्कारो विज्ञस्मार्त्तो विकर्मानुगुणवेदभागमप्यधीत्य समावर्तनमाचरणीयं तत्र समावर्तनस्नानार्थमनुष्ठानामुदकुम्भानां जालग्रहणं पारस्करः कु
शे प्रागग्रेषु पुरस्तात् स्थित्वा अष्टानामुदकुम्भानां ये अप्स्वन्तरग्नय इति जलग्रहणमन्त्रो यथा ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषो म राम
नोहस्खलो विरुजस्तनूदूषुरिन्द्रियहा तान् विजहामि यो रोचनस्तमिह गृह्णामि अस्यार्थः। अप्सु जलेषु अन्तः मध्ये ये अग्नयः प्रविष्टास्तान् विजहामि कं नेगो ७७

ज्वल्यमानाय हे अग्ने त्वं यथा समिध्यसे मया त्वं आहितयाऽनया समिधा ज्वलितासि एवमहं समिन्धसु प्रकाशो भवामि केन आयुषा जीवनेन मेधया बुध्या वर्च्च
सा तेजसा प्रजया सन्तानेन पशुभिर्गवादिभिः ब्रह्मवर्चसेन ब्रह्मतेजसा किंच मम आचार्यः जीवपुत्रो मेधावी अस्तु जीवपुत्रो मेधावी च ममाचार्यो भवत्वि
त्यर्थः अहमनिराकरिष्णुरसानि अग्निनाधायया गस्य करणं निराकरणं तत्कारी निराकरिष्णुः अनिराकरिष्णुर्नित्यं यागकारी भवामीत्यर्थः ॥ अपि
पिचाहम् आयुष्मान् यशस्वी तेजस्वी ब्रह्मवर्च्चस्वी वेदाध्ययनकृत् निगानन्दारो भूयासं अन्नमत्तीत्यन्नादः कदाचिदपि ममान्नविच्छेदो मा भवत्वित्यर्थः
अनया कामनया अग्नये स्वाहा स्वर्गं नं भवतु ततो माणवकोऽग्नौ हस्तौ प्रतप्य मुखं मार्जयेत् तथा च पारस्करः पाणी प्रताप्य मुखं विमृशेत् तनूपा अग्ने
सीति वाक्यान्ते मेधां मे इति मन्त्रो यथा तनूपा इत्यादि ॐ तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्च्चो मे देहि अग्ने यन्मे तन्वा
ऊनं तन्म आपृण। अस्यार्थः हे अग्ने तनूपा असि तनूः शरीरं तस्य पारक्षको भवति अतो मे मम तनूं शरीरं पाहि रक्ष हे अग्ने आयुर्दा असि आयुषो दाता
भवसि अत आयुर्मे देहि हे अग्ने वर्च्चोदा असि तेजो तेजसो दाता भवसि अतो वर्च्चो मे देहि हे अग्ने मे मम तन्वाः शरीरस्य यत् ऊनमसंपूर्णं तन्मे आपृण आपू
रय अत्र च तनुमिति तनूशब्दस्य द्वितीयैकवचने इयङ् प्रकरणेन त्वादीनां छन्दसु पसङ्ख्यानमिति यणादेशः हे अग्ने अनेन समिधादानकर्मणा
आराधितस्त्वं कुर्वितस्य सर्थना वाक्यार्थः मेधां मे इत्यादि ॐ मेधां मे देवः सविता आदधातु मेधां मे देवी सरस्वती आदधातु मेधामश्विनौ देवा मम देहादि
रक्षकं वाधत्तां पुष्करस्रजौ अस्यार्थः मम मेधां सविता देवः आदधातु तथा मे मम मेधां देवी सरस्वती आदधातु तथा देवौ अश्विनीकुमारौ आधत्तां किं भूतौ पु
ष्करस्रजौ पुष्करं पद्मं तन्मयी स्रक् माला ययोः पुष्करस्रजौ सपवित्रा देयो देवा मेधां मम जनयन्त्वित्यग्नावेव प्रार्थना वाक्यार्थः ततः प्राशनस्य
र्थने पारस्करः अङ्गानि च आप्याययतामिति तत्र मन्त्रो यथा अङ्गानि चेत्यादि ॐ अङ्गानि च म आप्यायन्तां यशो बलं च मम आप्यायतां अस्यार्थः ॥

ब्रा·स· तये स्याम। अस्यार्थः। हे वरुण उदुत्तमं पाशमस्मदुच्छ्रथाय अस्माद्दूरं श्लथं कुरु किंच अधमं पाशमवश्रथाय अवाचीनं श्लथय इति पूर्ववत्तद्वमध्यमं
७८ उत्तमाधमयोरन्तरं विश्रथाय स्वस्थानएव विशेषेण श्लथय अथैवं कृते आदित्यादितेः पुत्र वरुण व्रते ब्रह्मचर्ये यज्ञे वा अनागसः अनपराधाः सन्तः अ-
दितये अदीनत्वाये स्याम अदीना भवामेत्यर्थः ततो वासोन्यत्परिधायादित्यमेवोपस्थानं कुर्यात्। तथा पारस्करः। वासोन्यत्परिधायादित्यमुपतिष्ठेत उद्य-
न्भ्राजभृष्णुरिति। मन्त्रो यथा। उद्यन्नित्यादिगमयेसन्तः ॐ उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशशनिरसि दशशनिं मा कुर्वाविदन्मा ग-
मयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवायाभिरस्थाच्छतशनिरसि शतशनिं मा कुर्वाविदन्मा गमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायंपा-
वभिरस्थात्सहस्रशनिरसि सहस्रशनिं मा कुर्वाविदन्मा गमयेति। अस्यार्थः। इन्द्र आदित्यः उद्यन्नुदयं कुर्वन्नस्थात् स्थितो बभूव किंभूतः भ्राज-
भृष्णुः भ्राजं रश्मिं बिभर्तीति भ्राजभृष्णुः प्रातः प्रत्यूषे मरुद्भिर्देवैः सहास्थात् किंभूतैः पावभिः पावद्भिः पावन्तो देवास्तैः सर्वैः स्थितो बभूवेत्यर्थः त-
२५ तः हे विदन् हे विद्वन् सर्वं जानन्नादित्य त्वं दशशनिरसि बहुधनो भवसि अतो मामां दशशनिं कुरु बहुधनं कुरु किंच मां ब्रह्मचर्यादुत्तीर्णं मा ग-
मय ज्ञानी हि द्वितीयतृतीयपाठयोश्च दिवाया वभिः सायंपावभिः पावद्भिः सहस्रशनिरसि इत्येतावन्मात्रेषु विशेषः तत्र दिवा सायमिति प्रसि-
द्धार्थं शतसहस्रशब्दौ बहुत्ववाचिनावेवापरं सर्वं समानं आदित्यः प्रातर्दिवा सायंकालेषु रश्मीन्धारयन्सर्वैर्देवैः सह स्थितो बभूवेत्यादित्यमुक्तो-
र्थे हे सर्वज्ञादित्य बहुधनोसि मां बहुधनं कुरु ब्रह्मचर्यादुत्तीर्णं मां ज्ञानी हि चेति याचनावाक्यार्थः। तत्र पावभिरित्यत्र वर्णागमो वर्णविपर्ययश्चेति द-
कारलोपः आगमयेति कुर्वाविदन्नित्यत्र स्थिते नाऽत्र सम्बन्धः। ततः औदुम्बरेण काष्ठेन दन्तधावनं कुर्यात्। तथा पारस्करः। औदुम्बरेण दन्तान्धाव- राम
येत् अन्नाद्यायेति। मन्त्रो यथा। ॐ अन्नाद्याय व्यूहध्वं सोमो राजायमागमत्स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च। अस्यार्थः। हे वनस्पते व्यूह ७८

स्वः उपगोह्यः मयूषः मनोहा स्खलः विरुजः तनूदूषिः इन्द्रियहा इत्यष्टाचत्विनामानि एते चामयः सर्वे एव स्वस्वनामतो दोषावहत्वेन प्रतीयन्ते एतान्दे
तान्विहायेह जले योगिः रोचननामा कल्याणनामा तं गृह्णामि स्नानार्थं जले गृह्यमाणे जले ह्यनयस्तिष्ठन्ति तेषु मध्ये गोह्यादयो दोषावहास्तान् विहाय क
ल्याणनामा तेन मामभिषिञ्चामि प्रकाशाग्निसहितं जलं गृह्णामीति वाक्यार्थः प्रकाशकाग्निसहितं जलं गृह्णाति तत एकस्मात्कुम्भाज्जलमादायाभिषेकं
कुर्यात् तथा पारस्करः। एकस्माद्गृहीत्वा तेनाभिषिञ्चति तेन मामभिषिञ्चामीति तेन मामभिषिञ्चामित्यादित्रश्विनापश्चात्सन्तः तत्र मन्त्रो य
था ॐ तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय येन श्रियमकृण्वतां येनावमृशतां सुरां येनाक्षावभ्यषिञ्चतां यद्वा तदश्विनो यशः अ
स्यार्थः श्रियै लक्ष्मीलाभाय यशसे लाभाय ब्रह्मणे ब्रह्मज्ञानाय ब्रह्मवर्चसे ब्रह्मतेजोलाभाय अहं मामात्मानमनेन जलेनाभिषिञ्चामि तेन केन
येन जलेन हे अश्विनौ भवन्तौ लक्ष्मीमकृण्वतां कृतवन्तौ यथा येन सुरां सुराजनितां दोषमवमृशतां मार्जितवन्तौ यथा येनाक्षौ अक्षिणी अभ्यषिञ्च
तां अभिषिक्तवन्तौ तथा वांयुवयोर्यज्जलं यशो हेतुर्मामस्तु इत्यध्याहार्यं येन जलेनाश्विनीकुमारयोर्लक्ष्मीर्जनिता सुरादोषो मार्जितः श्च सुरभिषि
च्यादिकं कृतं तेन पोरित्यमभ्युदयकारणं यज्जलं तेनाभिषेकान्ममलक्ष्मीयशो ब्रह्मणो ब्रह्मज्ञानब्रह्मतेजांसि भवन्तीत्याशंसावाक्यार्थः। ततः पूर्व
वद्येश्वन्तरि प्रत्येकं जलकुम्भत्रयाज्जलमादायापोहिष्ठेति तिसृभिः प्रत्येकं स्नायात् तथा च पारस्करः। आपोहिष्ठेति तिसृभिरिति मन्त्रो यथा ॐ आ
पोहि १ योवः २ तस्मा अरं ३ अस्य मन्त्रत्रयस्य व्याख्यादिकं प्रातःस्नानप्रकरणे कृतत्वादत्र न कृतं तत्रैवानुसन्धेयं ततोऽयेश्वन्तरिति मन्त्रे योव प्रातक
लशलमादाय तूष्णीमेव जलकुम्भचतुष्टयेनाभिषेकं कुर्यात्। तथा च पारस्करः। तूष्णीमितरैरिति ततो मेखलोन्मोचनं शिरोमार्गेण कुर्यात्। पारस्क
रः। उदुत्तमं मेखलामुन्मुच्य विधायेति॥ तत्र मन्त्रो यथा ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय अथा वयमादित्य व्रते तवानागसो अदि

तिधानेन कीर्तिमान्मम भविष्यतीत्यर्थः। अपितु दीर्घायुस्त्वाय दीर्घायुष्ट्वार्थं किंजरद्दष्टिरस्मि जरद्वाष्टुकमस्तुनेत्याप्नोतीति जरद्दष्टिः हृष्टो भवामीत्यर्थः॥
प्रास किंच शतं शरदः शतं वर्षाणि जीवामि किं भूतः सुवर्चाः शोभनदीप्तिशाली रायस्पोषं रायस्पोषाय धनवृध्यर्थं मेतावद्भिः प्रयोजनैः। अभिसंव्ययि।
७९ ष्ये अभि सर्वतो भावेन सम्यग्व्ययिष्ये आवरणं करिष्यामीत्युपसंहारः पुनः पुनरुद्देशाऽऽदरातिशयार्थः। यशश्चिरायुस्त्वाय तेजो धनानां प्राप्त्यर्थं महं
परिधानं करोमीति वाक्यार्थः। रायस्पोषमिति सुपांसुपो भवन्तीति चतुर्थ्यर्थे द्वितीया॥ संव्ययिष्य इत्यत्र संवरणार्थस्य रूपम्॥ ततो द्वितीयव
स्त्रेणोत्तरीयं कुर्यात्॥ तथाच पारस्करः। अथोत्तरीयं यशसा मा द्यावापृथिवीति॥ तत्र मन्त्रः। ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती यशो भग
श्च माविदद्यशो मा प्रतिपद्यताम्॥ अस्यार्थः॥ द्यावापृथिवी अकाशपृथिव्यौ मा मां छादयेतामिति क्रियापदमन्त्राध्याहर्तव्यम्॥ केन यशसा।
किंच इन्द्राबृहस्पती यशसा मां माच्छादयेताम्॥ किंच यशः मा मामाविदत् प्राप्नोतु न केवलं यशो भगश्च सौभाग्यं च मा मां माविदत्॥ किंच यशो मा
२५ मां प्रतिपद्यतां प्रतिगच्छतु पुनः पुनरभिधानमादरातिशयार्थं॥ अनेनोत्तरीयवस्त्राच्छादनेनाकाशं पृथिवी इन्द्रो बृहस्पतिश्च मां यशसा आच्छादय
न्तु॥ उत्तरोत्तरयशः सौभाग्यं च मम भवत्वित्याशंसा वाक्यार्थः। ततः पुष्पमालां गृह्णीयात्। तथाच पारस्करः। सुमनसः प्रतिगृह्णाति या आहरज्जमदग्नि
रिति। मन्त्रो यथा॥ ॐ या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय ताहम्प्रतिगृह्णामि यशसा च भगेन च॥ अस्यार्थः॥ या पुष्पस्रजः जमदग्निर्महर्षिराह
रत्। आहृतवान् किमर्थं श्रद्धायै॥ एवमेवेति प्रत्ययः श्रद्धा॥ तदर्थं कामया अभिलषितसिध्यर्थम्॥ इन्द्रियाय चक्षुरादीन्द्रियप्राप्त्यर्थं च ताः पुष्पस्रजः अ
हं प्रतिगृह्णामि किमर्थं यशसा च यशसे च भगेन च भगाय सौभाग्याय च जमदग्निर्महर्षिणा॥ याः पुष्पस्रजः श्रद्धादिप्राप्तये गृहीताः ता एवाहम्॥ य एम
शः सौभाग्यप्राप्तये गृह्णामीति वाक्यार्थः॥ यशसा च भगेन चेति चतुर्थ्यर्थे तृतीया॥ ततस्तन्मालां शिरसि बध्नीयात्। तथाच पारस्करः तथा — बध्नीया ७९

